अनुभूतस्मृतकालान्तरप्रस्मृतसङ्गतेरव्यापनात् । अस्मर्यमाणेति चेन्न, कदाचिदस्मर्यमाणतायास्तत्रापि सम्भवात्, सर्वदाऽस्मर्यमाणतायाः क्वचिदप्यसम्भवात् । उपमितिप्राक्काले इति चेत्, स्यादप्येतद्यद्युपमितिर्लक्षिता स्यात्, तदर्थमेव तु क्रन्दनमिदम्भवतः । किञ्च सर्वैरनवगतसङ्गतित्वस्य प्रकृतेऽप्यसिद्धेः, केनाप्यनवगतसङ्गतित्वस्य वाक्यजेऽपि सम्भवात् । उपमात्रेति च पूर्ववन्निरस्तम् । यस्याः प्रमितेर्येन प्रमात्रेति चाभिधानेऽनुगतरूपाभावाद्व्यक्तौ पतनेन लक्षणाननुगत्यापत्तेः । सञ्ज्ञेत्यपि व्याकुलम्, गोसदृशो गवयः प्रायः कानने महति दृश्यते इतिश्रुतवाक्यस्य काननपदाविदितसङ्गतेर्गवयपदविदितसङ्गतेश्च सञ्ज्ञासञ्ज्ञिसम्बन्धप्रतिपत्तिफलायामीदृशप्रतिपत्तौ गतत्वेनाति-

---

येनोक्तानुसन्धानस्य कारणत्वासम्भवात् । अस्मृतसङ्गतेरव्यापनात् = अस्मृतसङ्गतेः पुरुषस्योपमितिकरणासङ्ग्रहात् । अस्मर्यमाणेति । तत्कालीनस्मृतिविषयत्वाभावः सङ्गतौ विवक्षणीय इति तत्र कदाचित्स्मृतिविषयत्वसत्त्वेऽपि न क्षतिरिति भावः । तत्कालपदेन यत्किञ्चित्कालो वा, उपमित्यव्यवहितप्राक्कालो वा तत्ताननुगमे सर्वकालो वा विवक्षितः, तत्राद्ये कदाचिदिति । तत्रापि = कदाचित्स्मृतसङ्गतावपि । तथा च गवयपदसमयग्रहोत्तरजातेऽतिदेशवाक्यार्थानुसन्धानेऽतिव्याप्तिरिति भावः । तृतीये सर्वदेति । असम्भवात् = अनिश्चयात्, तथा च लक्षणस्यापि न कथञ्चिन्निश्चयसम्भवः । द्वितीयमाशङ्कते उपमितिप्राक्काले इति । स्मृतिविषयत्वाभावः सङ्गतौ विवक्षित इति शेषः । स्वात्यव्यवहितप्राक्क्षणावच्छिन्नस्मृतिविषयत्वाभाववत्सङ्गतिकसंज्ञाघटितवाक्यार्थसामानाधिकरण्येन संज्ञाप्रवृत्तिनिमित्तपरिच्छेदात्मकोपमितिं निरस्य तत्करणतयोपमाननिरुक्तौ नात्माश्रयः, स्वत्वेनोपमितेरुपादानेऽप्युपमितित्वेनानुपादानादित्यस्वरसादाह किञ्चेति सर्वपुरुषीयनिश्चयविषयत्वाभावो वा, यत्किञ्चित्पुरुषीयनिश्चयविषयत्वाभावो वा, उपमातृनिश्चयविषयत्वाभावो वा विवक्षितः, तत्राद्ये सर्वैरिति । प्रकृते = उपमितिमात्रघटिते गवयादिशब्दे । तथा चासर्वव्याप्तिः । द्वितीये केनापीति । केनचिदित्यर्थः । वाक्यजे = मानान्तरेण गृहीतशक्तिग्रहानन्तरं पुनरपि गोसादृश्यादिसामानाधिकरण्येन शाब्दबोधादिगृहीतशक्तिके गवयादिशब्दे । तथा चातिव्याप्तिरिति भावः । तृतीये उपमात्रेति । अनवगतसङ्गतिकत्वं विवक्षणीयमिति शेषः । पूर्ववदिति । उपमितित्वेनोपमितेः प्रवेशेनात्माश्रयादित्यर्थः । ननु तत्पुरुषीयोपमितेः स्वाव्यवहितप्राक्क्षणावच्छिन्नतत्पुरुषीयनिश्चयविषयतानाश्रयसङ्गतिकसंज्ञेत्यादिप्रकारेण निर्वचने नोक्तदोष इत्याशङ्क्याह यस्या इति । व्यक्तौ पतनेन = तत्तद्व्यक्तिपर्यवसानेन । तत्तत्पुरुषत्वादेरननुगमादिति भावः । निर्वेदितमेतावत्पर्यन्ते । अन्यथाऽनुगमस्य स्वकल्पितत्वपक्षेऽप्याह संज्ञेति । व्याकुलं = एकांशस्य दुष्टतासम्पादकम् । महतीतिपदं सम्पातायातम्, काननपदसङ्गतिग्रहणे तदनुपयोगात् । गवयस्तु गोसदृश इति पदमपि तथैव, तद्धि वाक्यार्थस्य साधर्म्यवैधर्म्यान्यतरात्मकतया विलक्षणेऽपि निश्चयाविषयसङ्गतिककाननसंज्ञासमभिव्याहृतगोसाधर्म्यस्य गवयेऽनुसन्धानमन्तरीत्यापातती लक्षणसङ्गमनप्रदर्शनार्थम् । संज्ञासंज्ञिसम्बन्धप्रतिपत्तिफलायामिति । काननं काननपदार्थ इति प्रतिपत्तिफलकायामित्यर्थः । ईदृशप्रतिपत्तौ = गवयत्वेन प्रायो दृश्यमानं काननमितिप्रतिपत्तौ । अस्याः प्रतिपत्तेर्गवयत्वेन प्रायो दृश्यमानत्वरूपवाक्यार्थसामानाधिकरण्येन काननपदप्रवृत्तिनिमित्तपरिच्छित्तिकरत्वादुपमानत्वं स्यात्, तादृशविशिष्टविषयं तु काननं काननपदार्थं गवयत्वेन प्रायोदृश्यमानत्वादित्यनुमित्यात्मिका वा प्रसिद्धपदसमभिव्याहारान्यथानुपपत्त्यर्थापत्तिर्वेत्यन्यत् । गवयत्वेन दृश्यमानत्वरूपविशिष्टान्वयाय परमुक्तम् तदनुपादानेऽपि प्रसिद्धपदसमभिव्याहारान्यथानुपपत्त्याऽर्थापत्ते

व्यापकत्वात्, विनापि वा प्रायःशब्दमभिहितस्य तस्यानुसन्धाने प्रसङ्गः, तत्र काननसञ्ज्ञालिङ्गिसम्बन्धावधारणेऽप्यन्यथैव पदान्तरसम्बन्धोत्थाया अन्यथानुपपत्तेः प्रमाणत्वान्नतूपमानस्य । उपमेयसञ्ज्ञासमभिव्याहृतेति विशेषणे च पूर्वोक्त एव निरासः। वाक्यार्थेत्यपि तादृगेव, प्रतिपत्तिकालास्मृतातिदेशवाक्यगतकाननादिपदार्थस्य तथाविधप्रत्ययाव्यापनात् । वाक्यैकदेशस्यापि वाक्यत्वेन विवक्षितत्वे सदृशो गवय इत्यादिस्मारिणोऽपि प्रत्यये प्रसङ्गात् । प्रतीत्युत्पत्तिं प्रति प्रयोजकीभूतं यावत्तावद्वाक्यं

---

सम्भवः, न च गवयत्वेन प्राणो दृश्यमानत्वमपि क्वचिद्गृहादौ न सम्भवति, परिच्छित्तिशब्देन प्रमात्वविवक्षणेऽपि आप्तवाक्यान्यथानुपपत्तिग्रहेणापि प्रमोत्पादनात्, एवञ्चासल्लिङ्गकपरामर्शेनापि जन्याया धियो वस्तुतः साध्यवद्विषयकत्वे प्रमात्वसम्भव इत्यभिप्रायेणाह विनापीति । अभिहितस्य तस्य = उक्तरीत्योक्तवाक्यार्थस्य । ननु संज्ञासंज्ञिसम्बन्धप्रत्ययफलकत्वे तादृशानुसन्धानस्योपमानत्वमेष्टव्यमेवेत्यत आह तत्रेति । अन्यथैवेति । यथा प्रभिन्नकमलोदरे मधूनि मधुकरः पिबतीति वाक्यमाकर्ण्य मधुकरपदातिरिक्तपदार्थं विद्वान् मधुपानकर्तृतयाऽवलोक्यमानं मधुकरपदाभिधेयतया निश्चिनुते, मधुकरपदस्य तदभिधायकतां विना प्रसिद्धसमयकोक्तवाक्यघटकपदसमभिव्याहृतत्वानुपपत्तेः, तथा प्रकृतेऽपीति भावः । पदान्तरसम्बन्धोत्थायाः = गृहीतशक्तिकपदान्तरसमभिव्याहारज्ञानाधीनायाः । अन्यथानुपपत्तेरिति । अनुमानस्याप्युपलक्षणमिदम् । न तूपमानस्येति । प्रमाणत्वमिति विपरिणतमनुषज्यते । "नाभूदस्येतरोत्पत्तेः," "नानुपमृद्य प्रादुर्भावा"दिति न्यायसूत्रयोरभूदस्येतरोत्पत्तेरभावात्, अनुपमृद्य प्रादुर्भावाभावादित्यर्थकतादर्शनेन प्रथमेतरविभक्त्यन्तार्थस्यापि नञर्थान्वयोपगमे तु विपरिणामं विनापि निर्वाहसम्भव इति ध्येयम् । उपमानस्य हि साधर्म्यवैधर्म्यान्यतरसामानाधिकरण्येन प्रवृत्तिनिमित्तपरिच्छेद एव प्रामाण्यम्, न च काननपदस्य प्रकृतः प्रवृत्तिनिमित्तपरिच्छेदस्तादृशः, किञ्चित्साधर्म्यस्य वैधर्म्यस्य वा साधर्म्यत्वेन वैधर्म्यत्वेन वा कानने अप्रतीतत्वादिति भावः । नन्वनवगतसङ्गतिका संज्ञोपमेयस्य विवक्षिता उक्तवाक्येन च न काननं किञ्चित्सादृश्यवत्तयाऽभिहितमपि तु गवय इति काननसंज्ञाऽनवगतसङ्गतिकापि नोपमेयस्येत्याशङ्क्याह उपमेयेति । पूर्वोक्त इति । उपमितित्वस्य स्वज्ञानाधीनज्ञानकत्वापत्त्याऽऽत्माश्रय इत्यर्थः । ननु स्वाव्यवहितप्राक्क्षणावच्छेदेन तत्पुरुषीयनिश्चयविषयतानाश्रयसङ्गतिकतरसंज्ञासमभिव्याहृतवाक्यार्थसामानाधिकरण्येन तादृशवाक्यार्थस्य साधर्म्यत्वेन वैधर्म्यत्वेन वाऽनुसन्धानकालीनस्तत्संज्ञाप्रवृत्तिनिमित्तपरिच्छेदस्तत्पुरुषीयतत्संज्ञाप्रवृत्तिनिमित्तोपमितिस्तत्करणञ्चोपमानम्, तच्च तादृशानुसन्धानमेवेति नोक्तदोष इत्याशङ्क्याह वाक्यार्थेति । तादृगेव=व्याकुलमेव । तादृग्वाक्यार्थस्येत्यत्र तादृशसम्पूर्णवाक्यस्य वा तादृशवाक्यैकदेशस्य वा विवक्षा स्यात्, तत्राद्ये प्रतिपत्तीत्यादि । गवयपदार्थानवगन्तारं प्रति 'कानने गोसदृशो गवयोऽवलोक्यते' इत्यादिवाक्यप्रयोगस्थले द्रष्टव्यमिदम् । प्रतिपत्तिकालः = उपमित्यव्यवहितप्राक्कालः । पदार्थस्येत्यन्तं बहुव्रीहिणा पुरुषपरम् । तथाविधप्रत्ययाव्यापनात् = गवयो गवयपदवाच्य इत्युपमितेस्तत्करणस्य चासङ्ग्रहात्, सोपमितिर्हि तत्र न समग्रवाक्यार्थानुसन्धानकालीना, कानने गोसदृशो गवयोऽवलोक्यते इति समग्रवाक्यार्थानुसन्धानस्याभावात्, गोसदृशो गवय इत्यस्यैवानुसन्धानस्य तत्र सत्त्वादिति भावः । द्वितीये वाक्येति । इत्यादिस्मारिणोऽपि = इत्यादिवाक्यैकदेशस्मारिणोऽपि । अपरांशे संस्कारानुद्बोधदशायामिदम् । प्रत्यये = सदृशो गवय इत्यनुसन्धाने साधर्म्यत्वेन तादृशसंज्ञाघटितवाक्यार्थविषयके । प्रसङ्गात् = निरुक्तोपमितिकरणत्वप्रसङ्गात् । किञ्चित्प्रतियोगिकसाधर्म्यत्वेनानुसन्धानविवक्षायां नायं दोष

पमेयेऽप्यभावात् । व्याप्ततयाऽनवगतस्यमानस्येति च कृते यत्प्रति तल्लिङ्गं तेन सह व्याप्तत्वावगतमुपमितिकरणमपि न व्याप्नुयात् । उपमेयेन सह व्याप्तत्वानवगतस्योक्तावप्यनुमाने प्रसङ्गस्तदवस्थः । अनुमेयेन सहेति कृते च तदनपायादव्याप्तिस्तदवस्थैव ।

सम्बन्धास्फुरितसम्बन्धप्रमितिकरणमिति चेन्न, तथात्वासिद्धेः, अर्थापत्त्यादितस्तत्सिद्धेर्वक्ष्यमाणत्वात् । अनुमितिजनकं तादृक्प्रतिसन्धानमुपमानमिति चेन्न, तज्जातीय-

---

गत'मित्यपिमग्रन्थास्वरसाच्चेति । उपमेये = सादृश्यवत्तया अतिदेशवाक्यार्थानुसन्धानविषये । अभावादिति । सर्वस्यापि वस्तुतः किञ्चिन्निरूपितव्याप्तिमत्त्वादिति भावः । व्याप्ततयाऽनवगतस्यमानस्येति । प्रमाफलकं तादृशानुसन्धानमुपमानमिति शेषः । एवञ्च त्रिपदार्थं पदार्थोऽनुसन्धानान्तरपि । तथा च व्याप्तिवृत्तिरनुमित्युत्पादकानुसन्धानस्येति व्याप्यत्वावच्छिन्नविषयतानिरूपकत्वमनुसन्धाने विवक्षितव्यमिति भावः । यत्प्रति तल्लिङ्गं = सादृश्यवत्तयाऽनुसन्धीयमानं यन्निरूपितव्याप्तिमत् । तेन सह व्याप्तत्वावगमनमिति । तन्निरूपितव्याप्तिमत्त्वावगमं विषयीकृत्य येन तादृशमनुसन्धानमित्यर्थः । अथवा तन्निरूपितव्याप्तिमत्त्वेनावगतमनुसन्धानेन विषयीकृतं यदुपमेयं तदुपलक्षणमुपमितिकरणमपि तादृशानुसन्धानं न व्याप्नुयादित्यध्याहृत्य व्याख्येयम् । अनुमानानुसन्धाने व्याप्यतावच्छिन्नविषयतानिरूपकत्वासत्त्वेऽपि प्रकृतसादृश्यावच्छिन्नविषयतानिरूपितव्याप्यतावच्छिन्नविषयतानिरूपकत्वमक्षतमेव, तदेव च विवक्षितम्, न च गोसदृशत्वव्याप्यतया गोसदृशी एवावगाहनसम्भवेन क्वचिदव्याप्तिः, भ्रमघटितव्याप्यत्वस्य विवक्षितत्वात्, तदंशे भ्रममादाय तु न दोषः, प्रमीयमाणसादृश्यविषयतानिरूपकत्वस्य विवक्षितत्वात्, तथाह उपमेयेनेति । प्रकृतसादृश्यवतेत्यर्थः । उपमितिविषयस्य सामान्याश्रयत्वात् । अनुमाने = अनुमित्युत्पादकानुसन्धाने गवयपदवाच्यत्वनिरूपितव्याप्तिविषयके । अनुमेयनिरूपितव्याप्यतावच्छिन्नविषयतानिरूपकत्वविवक्षायां नातिव्याप्तिः, अनुमानस्य तादृशविषयतानिरूपकत्वादित्याशङ्क्याह अनुमेयेनेति । तदनपायात् = अनुमेयत्वस्य क्वचिदप्यनपायात् । अव्याप्तिरिति । उपमानेन यद्व्याप्यतयोपमेयावगाहनं तस्याप्यनुमेयत्वान्वयिनः, एवमनुमेयस्य सादृश्यादिना निवेशोऽपि दोष एव ।

स्यानुमितिजनकत्वात् । व्यक्त्यपेक्षायाश्चाजनकत्वस्य जनकत्वस्य सामान्याकारपर्यवसायिनो नित्यं व्यक्त्यसम्भवितयाऽननुगमेन चायुक्तत्वादिति । किञ्च गोसादृश्यं विहाय गवयत्वजातौ गवयशब्दार्थताप्रतीतिः कल्पनालाघवाख्यं तर्कमपास्य न स्यादिति तदुपन्यासस्थितौ किमानुमानिकत्वेन तत्र गवयपदवाच्यताप्रमितिरियं नेष्यते, सम्भवति हि प्रयोगः—विमतिपदं गवयशब्दप्रवृत्तिनिमित्तं तथात्वे तर्केण विपर्योक्रियमाणविपर्य-

जनकत्वात् = व्यवहारसंबन्धसाध्यकानुमितिजनकताया दुर्निरूपत्वात् । न च तस्य व्याप्तिज्ञानत्वेनैवानुमितिजनकत्वं सम्भवम्, तत्र कथमिति वाच्यम्, यो गोसदृशः स गवयपदव्यवहार्य इत्यतिदेशवाक्यघटके वा गोसदृशो गवयपदव्यवहार्य इत्यतिदेशवाक्यस्य गोसदृशत्वावच्छेदेन तादृशव्यवहार्यत्वबोधप्रवृत्तिद्वारा योग्यानुसन्धानस्य व्याप्तिज्ञान-वसम्भवात्, तादृशबोधे व्याप्तिनिरूपकत्वभानात् । एवञ्चानुमितिजनकत्वयोः कस्य निर्धारणेन तन्निर्णयोऽशक्य । द्वितीये व्यक्त्यपेक्षया साजनकत्वस्येति । तज्ज्ञानीयस्यानुमितिजनकत्वेऽपि तस्यानुमितिजनकत्वाभावविशिष्टयोत्पत्तिविशेषस्येत्यर्थः । एवञ्च फलीभावकत्वनिषेध एव पर्यवस्यति । अयुक्तत्वादिति सम्बन्धः । तत्र हेतुमाह अजनकत्वस्येत्या दिना । सामान्याकारपर्यवसायिनः = सामान्यधर्मावच्छेदेनैव स्थेयं वाच्यस्य । व्यक्तौ नियमसम्भवितया = व्यक्तीनामानन्त्येन विशेषधर्मपुरस्कारेण कथमपि प्रत्येकमशक्यतया । एवं हि तद्व्यक्तितादृशानुसन्धानस्य नैरनुमित्युपधायकत्वाभावसम्भवात्तत्पुरस्तीयोपमितिकरणत्वमित्युक्तं स्यात्, करणत्वञ्च कारणताघटितमिति प्रातिस्विकरूपेण तादृशानुसन्धानव्यक्तीनां कारणताग्रहोऽनुसर्तव्यः, न च स सम्भवतीति भावः । नन्वेवं सर्वासां तादृशव्यक्तीनां तत्पुरस्तीयोपमितिकरणत्वानुपपादनेऽपि कस्याश्चित्तत्वं तावन्निर्युक्तमेवेत्यत आह अननुगमेनेति । तत्पुरस्तीयोपमितिकरणत्वमपि नैवमनुगतं निर्धारितमिति भावः । किञ्चैवमनुगतधर्मपुरस्कारेऽन्यथासिद्धस्यापि कारणताप्रसङ्गः, तज्ज्ञानीयस्य तं विनाप्युत्पत्तिदर्शनेनेत्यन्यस्यानुगतधर्मं पुरस्कृत्यैव वक्तुं शक्यत्वात्, किञ्च यत्किञ्चित्प्रतिस्वरूपयोग्यत्वेऽपि तदनुपधायकत्वमात्रेण न तस्य विशेषकरणत्वहानिर्भावोऽभ्युपगम्यते मानामात्राद्विनिगमकाभावेऽप्यपि द्रष्टव्यम् । ननु व्याप्तिज्ञानाधीनतादृशानुसन्धानस्यानुमितिजनकत्वेऽपि तादृशप्रतिसन्धानत्वेनोपमितिजनकत्वमेव, उपमितिकरणत्वावच्छेदकमेव चैवं निरूपितम्, उपमितिकरणलक्षणं तु नैतदिति मानुषमिति नासौ दोष', अननुमितिजनकत्वस्यानिवेशनीयत्वादिति चेत्सत्यम् अत एव पूर्वोपयुक्तमात्मन्यविरुद्धं युक्तिमवतारयति किञ्चेति । शब्दार्थेति । गवयत्वावच्छेदकस्य वाच्यत्वाभिप्रायेणेदम् । लाघवेनेति । गवयत्वस्याव्यवहारलघुत्वम् । तर्कमिति । व्याप्त्यमूलकत्वेऽपि विपर्ययापर्यवसायित्वेऽपि च प्रमाणाधीननिर्धारणानुग्राहकत्वेनैवास्य तर्कव्यवहार इत्युदयनादिमतस्थात् ' अनौचित्याविरुद्धतर्केण "तिकारिकायामर्थात् । तदुपन्यासस्थितौ = लाघवाख्यतर्कानुसन्धानस्यावश्यकत्वे । तत्र = गवयत्वे । प्रयोग इति । परार्थे प्रयोगप्रदर्शनं स्वार्थेऽनुमानाभ्युपगमप्रदर्शने एव पर्यवसानम्, अन्यथोपमानस्य पूर्वकृतमनुमानान्यत्वसम्भवात् । विमतिपदं = विवादविषयीभूतं गवयत्वं । तस्य शाब्दज्ञानेऽपि प्रत्यक्षेऽपि प्रमितिजनकत्वाद्गवयत्वेनोपस्थितस्यापि गवयपदशक्यतायां धर्मित्वसम्भवः । गवयशब्दप्रवृत्तिनिमित्तं = गवयपदस्य प्रवृत्तौ तादृशबोधजनने ज्ञायमानतया निमित्तं शक्यतावच्छेदकमिति यावत् । तथात्वे = गवयपदप्रवृत्तिनिमित्तत्वे तर्केण = तर्कमहत्त्वलाघवेन, स्वतन्त्रतर्कस्यानिश्चायकत्वेन व्याप्तिमूलकस्यापि तर्कस्य विपर्ययानुमानद्वारैव निश्चायकत्वेन गौरवादेशलघुत्वेन यथाश्रुतासम्भवात् । विपर्योक्रियमाणो बोध्यमानो विपर्ययो यस्य तथाभूतः । अत्र गवयत्वम् । अप्रमाणत्वे बाधकस्य आधेयत्वासम्भवात्

यकत्वान्न यदेवं न तदेवं यथा गोत्वं तथा चेदं ततस्तथेति, नह्यस्ति सम्भवो मूलशैथि-
ल्यादिदोषविरहिततर्कनिवेदितविपर्ययश्चार्थो न च तथेति । अथवा गवयपदमसम्भ-
वत्प्रवृत्तिनिमित्तान्तरमनुपपद्यमानान्नोक्तगोसदृशसामानाधिकरण्यमर्थाद्गवयत्वप्रवृत्ति-
निमित्तकत्वमाक्षिपतीत्यर्थापत्तिरेवात्र प्रमाणमस्तु, सा च त्वया व्यतिरेकीकृत्य

---

अप्रतियोगिनाक्तो गवयशब्दप्रवृत्तिनिमित्तनिष्ठ इति सप्तम्यन्तार्थस्य तादृशप्रवृत्तिनिमित्तत्वनिष्ठत्वस्या-
प्रैवान्वय इति । नन्वेवं तर्कसहकृतप्रमाणबोधितस्वेतरप्रवृत्तिनिमित्ताभावकत्वादित्येव हेतुः कुतो नोक्त
इति वाच्यम्, स्वेतरगोसादृश्यादौ प्रवृत्तिनिमित्तत्वाप्रसिद्ध्या सिद्ध्यसिद्धिव्याघातात् । वोध्यमानाप्रां
स्वरूपासिद्धिशङ्कापरिहाराय । गवयपदं किञ्चित्प्रवृत्तिनिमित्तकं साधुपदत्वादित्यनुमानमेव गौरवप्रति-
सन्धानसहकृतं गवयपदस्येतराप्रवृत्तिनिमित्तकत्वं बोधयतीति भावः । गवयशब्दो गवयत्वप्रवृत्तिनि-
मित्तकस्तदितराप्रवृत्तिनिमित्तकत्वे सति सप्रवृत्तिनिमित्तकत्वादिति तु प्रयोगान्तरम् । न यदेवमिति ।
यत्पदे वीप्सा मादृता, तत्सत्त्वेऽपि सकलसाधनाधिकरणतात्पर्यग्रहे व्यभिचारबुद्धेर्निवृत्त्यसम्भवात्,
तादृशतात्पर्यग्रहे तु तद्बलादेव यथोगप्राथम्यात्मा साधने व्याप्तिधियः सम्भवादित्यभिप्रायः, अत एव
वीप्सायामपि व्यभिचारज्ञानतादवस्थ्यं मणावुक्तम् । अप्रयोजकत्वं परिहरन्नाह नहीति । मूलशैथि-
ल्यादीत्यादिना विपर्ययापर्यवसानेष्टापत्त्यादिकं ग्राह्यम् । मूलशैथिल्यञ्च व्याप्तिराहित्यम् । अप्राद्यमाया-
मेव तात्पर्यम्, तेन गौरवादेर्व्याप्तिराहित्येऽपि विपर्ययापर्यवसायित्वेऽपि च न क्षतिः, अधिकं त्वत्र चतुर्थे
वक्ष्यते । तर्कनिवेदितविपर्ययः = तर्कसहकृतप्रमाणनिवेदिततदितराप्रवृत्तिनिमित्तकः । न च तथा =
न च तत्प्रवृत्तिनिमित्तकः । स्वघटितबहुव्रीहिणाऽर्थपदेन गवयत्वग्रहणे तु तथापदं प्रवृत्तिनिमित्तपरम् ।
ननु पूर्वं तर्कानवतारदशायां साधुपदत्वलिङ्गकेन सामान्यतोदृष्टानुमानस्य किञ्चित्प्रवृत्तिनिमित्तकत्वप्रत्या-
यनेनैव पर्यवसानेनेतराप्रवृत्तिनिमित्तकत्वप्रत्ययासम्भवे केवलव्यतिरेक्यनवतारात् प्रवृत्तिनिमित्तविशेष-
परिच्छेदाय पश्चात्तर्कसहकृतमुपमानमेव शरणीकरणीयमिति चेदत्र वदन्ति—बलवत्प्रमाणाभावेन
सामान्यतोदृष्टस्य पुनरनुसन्धानमात्रं कल्पयितुमुचितम्, लाघवात्, न तु मानान्तरं गौरवात् । न च
पुनरनुसन्धीयमानादपि तस्मादेतराप्रवृत्तिनिमित्तकत्वप्रतीतिसम्भवः, अनुमितेर्व्यापकतावच्छेदकप्रकार
कत्वनियमादिति वाच्यम्, तथानियमे मानाभावात्, लाघवादिसहकारे व्यापकतानवच्छेदकरूपेणापि
साध्यस्यानुमितौ भाने बाधकाभावात्, यदाह शिरोमणिः—"सति लाघवप्रतिसन्धाने शब्दार्थपरिच्छेद-
कत्वमनुमानस्ये"ति । कथमन्यथा क्षित्याद्येककर्तृकत्वानुमितिः । एवञ्चोक्तव्यतिरेकिपर्यन्तानुधावन-
मप्यनतिप्रयोजनकम्, उक्तसामान्यतोदृष्टस्यैव लाघवप्रतिसन्धानसहकृतस्य जातिविशेषपरिच्छेदकत्वो-
पपत्तेः । किञ्च यथा देवदत्तो जीवनमरणान्यतरप्रतियोगी प्राणित्वादिति सामान्यतोदृष्टमभावरूपमर-
णापेक्षया भावरूपजीवने लाघवानुसन्धानसहकृतं पुनरनुसन्धीयमानं जीवित्वप्रकारकं ज्ञानमर्जयती-
त्यर्थापत्तिमगायुर्दीरितम्, तथा गवयपदं गवयत्वतदितरान्यतरप्रवृत्तिनिमित्तकं साधुपदत्वादितिसामान्य-
तोदृष्टं लाघवानुसन्धानसहकृतं पुनरनुसन्धीयमानं गवयत्वप्रवृत्तिनिमित्तकतामवगमयतु । किञ्च
गवयत्वेतरत्र प्रवृत्तिनिमित्तं लघुसमानाधिकरणगुरुत्वादिनिमानेनेतराप्रवृत्तिनिमित्तकत्वनिश्चये उक्त-
व्यतिरेकिणैव गवयत्वप्रवृत्तिनिमित्तकत्वसिद्धिसम्भवः । न च साध्याप्रसिद्धिः, गवयत्वं किञ्चित्पदप्रवृ-
त्तिनिमित्तं जातित्वादित्यादिना सामान्यतस्तत्सम्भवात् । व्याप्त्यप्रतिसन्धानदशायान्तु गवयत्वप्रवृ-
त्तिनिमित्तकत्वपरिच्छेदे मानाभाव इति । गोसदृशेति । गोसदृशत्वादेरित्यर्थः । भातेन गोसदृशशब्द-
समानविभक्तिकतया गवयशब्दोच्चारणे गोसदृशवृत्तिधर्मस्यैव गवयशब्दप्रवृत्तिनिमित्तत्वमायाति, स

परेण पृथगेवावश्यं प्रमाणनीयेति । इत्युपमानखण्डनप्रकरणम् ।

---

च धर्मो गवयत्वं वा, गोसादृश्यतद्व्यक्तित्वादिकं वा स्यात्, तत्र द्वितीये गौरवादाद्यस्यैवार्थापत्तिविषयतेति । अर्थात् = सामर्थ्यात्, परिशेषादिति यावत् । इति खण्डनशारदायामुपमानखण्डनप्रकरणम् ।



# अथ शब्दखण्डनप्रकरणम् ।

शब्दोऽपि क उच्यते ? आप्तवाक्यं हि शब्दः प्रमाणमिति न युक्तम्, विकल्पानुपपत्तेः । तथाहि—कोऽयमाप्तो नाम । यथादृष्टवादीति चेन्न, भ्रान्तिप्रतिपन्नवादिवाक्येऽपि प्रसङ्गात् । प्रमाणदृष्टेति विशेषणे च तथाभूतस्यान्यथावादव्यापनात् । यथा प्रमाणेतिकरणे चांशे तथाभूतवादिवाक्यस्यायथार्थस्यापि व्यापनात् । यावद्यथाप्रमाणदृष्टनिरुक्तौ च प्रायेणातथाभूतत्वादेव लक्ष्याणां तदव्याप्तेः, नहि यावत्प्रमितं तावदभि-

---

शब्दोऽपीत्यादि । कीदृशः शब्दः प्रमाणशब्द इत्यर्थः । अन्यथा शब्दस्वरूपप्रश्ने स्फोटाद्युत्तरापत्त्याग्रिमग्रन्थासङ्गतेः । सङ्गतिरपि किमर्थों च प्राग्वत् । शब्दस्वरूपशब्दादिग्राहकस्योपजीव्यानां निरस्तत्वादिति । आप्तवाक्यमिति । शब्दत्वमपहाय वाक्यत्वेनोपादानं ध्वनिनिराकाङ्क्षशब्दव्यावृत्तये । शब्दः प्रमाणमिति । प्रमाणशब्द इत्यर्थः । यथादृष्टवादी = स्वज्ञानसमानविषयकज्ञानजनकज्ञानविषयवाक्यप्रयोक्ता । भ्रान्तीत्यादि । भ्रान्त्या विपर्यीकृतमर्थं वदतोऽपि वाक्ये इत्यर्थः । प्रसङ्गादिति । प्रमाणशब्दलक्षणस्येत्यादिः । प्रमाणदृष्टेत्यादि । स्वीयप्रमासमानविषयकज्ञानप्रयोजकवाक्यप्रयोक्ताऽऽप्त इति विवक्षणीयमिति भावः । यद्यपि प्रमासमानविषयकज्ञानप्रयोजकवाक्यस्यैव प्रमाणशब्दस्वसम्भवे ताद्दृशवाक्यप्रयोक्तृवाक्यत्वेन तन्निर्वचनं वैयर्थ्यग्रस्तम्, आप्तलक्षणस्यैव खण्डनं तु न सन्दर्भसङ्गतम्, तत्तद्वाक्ये एवातिव्याप्तेरुच्यमानत्वात्, प्रमितिप्रयोजकवाक्यत्वस्य लक्षणान्तरत्वसम्भवेऽपि तादृशज्ञानप्रयोजकवाक्यत्वे यथासन्निवेशे न वैयर्थ्यम् । नचैतदेवात्र दूष्यताम्, घटकव्याप्त्यादेरत्र सुसङ्गमादिति वाच्यम्, 'तावदभिधीयत' इतिपर्यन्तग्रन्थस्यैतत्खण्डने सुयोजत्वेऽपि "यथाप्रमितस्यैव"त्यादिग्रन्थस्य दुर्योजत्वात्, अश्वत्थामा हतो नरो वा कुञ्जरो वेतिवाक्यस्यालक्ष्यत्वेनाव्याप्त्यभिधानस्यासामञ्जस्यात्, प्रयोक्तृघटितलक्षणस्य स्वव्याप्तिर्वाक्यान्तरे एव शक्यवचनत्वात्, तथापि 'यथाप्रमितस्य'त्यादिग्रन्थो यथाश्रुते एव नेतव्यः, वैयर्थ्यमेव वा तादृशग्रन्थव्याख्यानामन्तरमुद्घाटनीयमिति । तथाभूतस्यान्यथावादः = प्रमाविषयविषयकभ्रान्तिप्रयोजकं वाक्यं घटत्वादिना प्रमितस्य पटत्वादिना बोधकम्, तत्र प्रमाणविशेष्यकत्वमादायातिव्याप्तेः । यथाप्रमाणेति । प्रमीयविशेष्यतानिरूपितविशेष्यताकबोधप्रयोजकत्वं वाक्ये वक्तव्यम्, वैशिष्ट्यञ्च स्वावच्छेदकधर्मावच्छिन्नत्वस्वनिरूपितप्रकारतावच्छेदकावच्छिन्नप्रकारताकत्वाभ्याम्, प्रकारतावच्छेदकं तु धर्मसंसर्गोभयमेव ग्राह्यम्, एवञ्च घटत्वादिना संयोगादिना वा प्रमितस्य पटत्वादिना सम्बन्धान्तरेण वा बोधजनकवाक्ये नातिप्रसङ्ग इतिभावः । अंशे = यत्किञ्चिद्विषयकत्वावच्छेदेन, इदं तथाभूतपदार्थान्तःपातिप्रमाण्यान्वयि । अयथार्थस्य = अपरांशेऽप्रमाण्यबोधजनकस्य ह्रदो जलवान् वह्निमांश्चेत्यादिकस्य । एवं ह्रदपर्वतौ जलवन्तौ, संयोगसमवायाभ्यां ह्रदे जलवानित्यादि वाक्यमपि ग्राह्यम् । यावदित्यादि । उक्तदोषवारणाय स्वावच्छेदकतासमनियतावच्छेदकताकत्वस्वनिरूपितप्रकारतावच्छेदकतासमनियतावच्छेदकताकप्रकारताकत्वाभ्यां वैशिष्ट्यं विवक्षणीयमिति भावः । व्यापकतामात्रविवक्षायामुक्तदोषतादवस्थ्यम्, व्याप्यतामात्रविवक्षायामुक्तदोषाभावेऽपि परतोऽव्याप्त्यभिधानासङ्गतिरिति सामनैयत्यमिहाभिप्रेतम् । अत्र च व्यापकतानिवेशस्य वैयर्थ्यमत एवाह प्रायेणेति । भूतले घटपटादानेकपदार्थान् प्रमाय भूतलं घटवदित्येतावन्मात्रबोधजनकवाक्यस्यापि प्रयोगदर्शनात्सामनैयत्यविवक्षाया अव्याप्त्यापादकत्वादिति । नहीति । सर्वत्रेति शेषः । अत एव प्रायेणेत्युक्तम्,

पदसमुदायो वाक्यमितिचेत्, एकत्वविषयत्वावच्छिन्नत्वाना वाच्यानि दूषणानि ताव-

द्रूपेण तादृशस्यैव लक्ष्यताया औचित्येन पदत्वविवक्षाया आवश्यकत्वमेवेति द्रष्टव्यम् । एकत्वेति । श्वेतो धावतीत्यादिवाक्ये शुक्लो धावति, इतः श्वा धावतीत्याद्यर्थद्वयप्रतिपिपादयिषयोच्चरिते विशिष्टार्थद्वयप्रतिपादकेऽव्याप्तिः । न च तत्र वाक्यद्वयमेव प्रत्येकं लक्ष्यम्, श्वेतो धावतीत्यस्य सकृदेवोच्चरितत्वेन वाक्यद्वयस्य प्रत्यक्षबाधितत्वात् । एकस्यैव च वाक्यस्यार्थद्वयपरत्वे बाधकाभावात् । अतएव पुनरनुसन्धानात्मिकाऽऽवृत्तिरपि न तत्र युक्तिमती, उक्तं हि शब्दमण्यादौ "अनेकपदार्थप्रतीतीच्छयैकमुच्चारणं भवत्येव, पुमिच्छाया नियन्तुमशक्यत्वात्, यदि च वाक्यात्मकं तदुच्चारणं नानेकार्थपरं तदाऽऽवृत्तिरपि न स्यात्, तात्पर्यनिर्वाहार्थमेवावृत्तेः कल्पनात्, तात्पर्यविषयान्वयानुपपत्तिं विनाऽप्यावृत्तेः कल्पने एकार्थपरेऽपि घटोऽस्तीत्यादिवाक्ये आवृत्तिः स्यात्, अतएवानेकार्थकवाक्योच्चारणस्योभयपरतायां नावृत्तिकल्पनम्, तस्माद्युगपदेवानेकार्थोपस्थितौ ता यथादिज्ञाने युगपदनेकान्वयबोधः, सामग्र्यास्तुल्यत्वात् प्रथममेकस्यान्वयबोधो न तदन्यस्येति नियन्तुमशक्यत्वा"दिति । एवमव्याप्तिर्दुर्वारैव । किञ्च विशिष्टार्थद्वयप्रतिपादकस्य विशिष्टैकार्थस्यापि प्रतिपादकत्वेनैकत्वमात्रस्याव्यावर्तकत्वेन द्वित्वाद्यनवच्छिन्नत्वरूपस्य च तस्य वस्त्वन्तरान्तर्भावेणैकस्मिन्नपि द्वित्वावच्छिन्नत्वसद्भावेनासम्भवापादकत्वेन पदार्थान्तरत्वाभावोयुक्तेश्चाखण्डोपाधिन्यायेनायोग्याश्रयाव्यवहारेण स्वसजातीयनिष्ठभेदप्रतियोगित्वाभाव एव स्वस्यैकत्वं वाच्यम्, तत्र च सामान्यस्य भेदघटितस्यैवानुभविकत्वेन स्वसजातीयस्य सिद्ध्यसिद्धिभ्यां तादृशप्रतियोगित्वाभावस्य व्याघात । अथ स्वोद्देश्यकविधेयकसिद्धभेदप्रतियोगित्वाभावो विवक्षणीयः, स्वोद्देश्यकविधेयकता च स्वस्मिन्नपि सम्भवति, एकोविशिष्टार्थं प्रकृतवाक्यप्रतिपाद्य उद्देश्यविधेयभावमादाय च प्रकृते समन्वयः । नच पदाद्रिमद्भूतलेऽप्येकोयगो भूतल्यवृत्तिरितिप्रतीत्युदयेन घट उपपादनीयमेकत्वं नोक्तं सम्भवतीति वाच्यम्, स्वाश्रयस्यैवोद्देश्यतावच्छेदकत्वाभ्यां स्वोद्देश्यकविधेयकताया विवक्षितत्वादिति चेन्नैतद्रम्यम्, उभयभेदप्रतियोगित्वमादायासम्भवस्य दुर्वारत्वात्, भेदे स्वप्रतियोग्यवृत्तित्वविवक्षाया अपि प्रतियोगिवृत्तित्वोदासीनोभयाभावोपादाननिबन्धनदूषणलक्षणामहात्म्यात् । एवञ्च पुराऽऽवेदितस्य स्वरूपान्यत्वनिरासस्यावतार इति । अतएव—एकत्वमेकमात्रवृत्तिधर्मोऽभेदाख्य, स चामाथय, स्वप्रतियोगिवृत्तित्वस्वानुयोगिवृत्तित्वाभ्यां भेदविशिष्टान्यत्वस्यैवैकमात्रवृत्तित्वरूपत्वात्, न चैव तद्व्यक्तिप्रतिपादकत्वस्य वाक्यान्तरेऽभावेनाननुगम, तादृशार्थ एव वाक्यस्य लक्ष्यत्वादिति—निरस्तम्, उक्तरीत्या भेदविशिष्टेऽपि तदन्यत्वसम्पादनस्य सुकरत्वात् । अननुगमस्तु सुलभ एव सर्वसाधारणो दोषः, एकत्वव्यवहारस्यानुगतस्यैव दर्शनादिति । नन्वेकवाक्यस्य वाक्यान्तरार्थे वाक्यत्ववारणाय यादृशविषयताकान्वयबोधजनको यो मिथः साकाङ्क्षपदसमुदायस्तस्य तादृशविषयताकबोधजनने वाक्यत्वं विवक्षणीयम्, तत्र चैकत्वोपादाने न प्रयोजनम्, मिथः साकाङ्क्षत्वोक्त्यैव गौरश्वः पुरुष इत्यादिसमुदायवारणसम्भवात्, आकाङ्क्षा चाव्यवहितोत्तरत्वसम्बन्धेन तत्तद्विशिष्टतत्पदत्वादिरूपा तादृशशाब्दानुकूलैव विवक्षणीया, एवं च हृदो वह्निमानित्यादेरपि वाक्यत्वोपपत्तिः, विशिष्टार्थाप्रसिद्धावपि निरूप्यनिरूपकभावापन्नविषयताशालिबोधस्य तत्र प्रसिद्धेः । तत्राह विषयत्वेत्यादि । विषयत्वनिरासमग्रे वक्ष्यते । अवच्छिन्नत्वं शाब्दबोधजनकत्वम्, तदनुपधानं वा योग्यत्वं वा शाब्दबोधेच्छयोच्चरितत्वं वा, नाद्य, शुकाद्युच्चरिते वाक्यविशेषे केनापि व्युत्पन्नेनाश्रुतेऽव्याप्तेः, तस्य शाब्दानुपधायकत्वात्, दोषसम्भावनयापि लक्षणस्यानुपपत्तेः । न द्वितीय, तथाहि योग्यतावच्छेदक परस्परसाकाङ्क्षपदसमुदायत्वमेव

स्तन्तु पदपदार्थं तु चिन्तयामः । सुप्तिङन्तं पदमित्येके । वर्णा विभक्त्यन्ता पदमित्यन्ये ।

---

स्यात्, आकाङ्क्षा चोक्तानुपूर्वी राज्ञः पुरुषः, पुरुषो राज्ञ इत्यादि नैकविधा, तथा चैकतया योग्यतावच्छेदकतया निवेशेऽपरतज्ज्ञानाच्छाब्दानुत्पत्त्यापत्तिः नचान्यतमत्वेन सर्वासां योग्यतावच्छेदकत्वम्, अनुयोगिप्रतियोगिविधया सकलप्रपञ्चघटितत्वेनान्यतमत्वस्यासर्वज्ञाज्ञेयत्वात्, भेदज्ञाने विशिष्यैवानुयोगिज्ञानस्यापेक्षणीयत्वात्, न च तत्तद्भेद एव स्वानुयोगितावच्छेदक, आत्माश्रयापत्त्या भेदखण्डने दत्तोत्तरत्वात् । भेदोपपादकं ह्यनुयोगिप्रतियोगिगतवैधर्म्यं भेदातिरिक्तमेव निरूपणीयम् । अन्यथा तद्व्याप्यस्य भेदस्याप्यभेदरूपत्वात् । तथाऽव्यवहितोत्तरत्वं निवेश्य निस्तार, राजसम्बन्धि पुरुषार्थे पुरुषो राज्ञ इत्यादेरिव राज्ञः पुरुष इत्यादेरपि वाक्यत्वात् । आवेदितञ्चाव्यवहितोत्तरत्वघटितस्य कार्यकारणभावमात्रस्याप्रामाणिकत्वमधस्तात् । न च शक्तिविशेषो योग्यतावच्छेदक, स्वध्वंसाद्यनुकूलशक्तेरप्रामाणिकत्वे शाब्दानुकूलशक्तेः शाब्दजनकतावच्छेदकत्वोपगमे कार्योत्पादस्य कारणतावच्छेदकशक्तिज्ञानसमवधानाधीनत्वेनान्योन्याश्रयात्, स्वीकृतञ्च गुरुधर्मेणैव कार्यघटितरूपेणापि कारणतायामन्यथासिद्धत्वं ताकिकैः । एतेन यादृशपदानां यादृशार्थविषयताकशाब्दानुकूला परस्पराकाङ्क्षा तादृशपदसमुदायस्तादृशार्थे वाक्यमित्यत्रापि शाब्दजनके आकाङ्क्षाज्ञाने योग्यत्वमुपधायकत्वं वा जनकत्वं वा विकल्प्य निरसनीयम् । न चरमः, शाब्दबोधेऽसति विनैवोच्चरितानां शुकादिवाक्यानाम् सङ्ग्रहात् । न पूर्वः, ईश्वरेच्छैव तत्रोपाधिः, अनेकार्थवाक्यस्थले यादृशार्थविषयकप्रतीतीच्छयोच्चरितत्वाभावनिश्चयस्तादृशार्थेऽपि तस्य वाक्यत्वप्रसङ्गात्, ईश्वरेच्छायास्तत्रापि विरुद्धत्वात् । ईश्वराज्ञाद्वारा च भवतैतदापत्तिर्नाऽपि विधातुं शक्यते । न च तादृशार्थविषयकशाब्दजनकव्यवहितपूर्ववृत्तेरेव छायास्तत्रापक्षणीयत्वम्, कारणतावच्छेदके कार्यप्रवेशोपगमरीत्यैव परस्पराश्रयात् । सङ्क्षिप्तमिति । तन्त्रापेक्षायां किं बीजमिति चेत्परस्परसाकाङ्क्षपदसमुदायस्य वाक्यस्यार्थविशेषानियन्त्रितस्यान्यथाऽसम्भवात्तत्रैव वादीनामप्रतिष्ठित्वात् पदस्य खण्डनस्य [illegible] तस्मात्कारणत्वादित्याशयादिति गृहाण । वर्णा इति । एतत्राकाङ्क्षानिवृत्तिमात्रफलकम् । इत्यन्ये इति । न्यायसूत्रकृत इत्यर्थः । शक्तं पदम्, यदीयवृत्तिज्ञानीयविषयता यद्विषयताप्रयोजिका तत्तदर्थे पदमिति तु न विकल्पितम्, उक्तरीत्या गौरित्यादिमात्रस्य वाक्यतायाः स्वीकारमनहंस्यता प्रसङ्गवारकत्वात् । का चेयं शक्तिः ? न तावत्पदार्थान्तरम्, तस्य प्रमाणविशेषसाक्षिकतया निरूपणे परस्पराश्रयात्, अन्यानुकूलशक्तिमतोऽन्यस्योत्पत्तिवारणाय तत्तत्कार्यानुकूलशक्तिमत्त्वेन कारणताया वक्तव्यतयोक्तरीत्याऽन्योन्याश्रयाच्च, शक्ती तत्तत्कार्यानुकूलत्वं च तत्तत्कार्यजनकतावच्छेदकतारूपत्वेन शक्तित्वेन च जनकतावच्छेदकतायाः अतिप्रसक्ततयाऽसम्भवेन जनकतावच्छेदकतानिविष्टरूपेण तथात्वस्याभिधेयत्वे जनकतावच्छेदकतायाः स्वावच्छेदकतावत्ताऽन्योन्याश्रयाच्च । नापि पदपदार्थयोरितरेतराध्यासमूलकतादात्म्यग्रहणे वाच्यवाचकभावापरपर्यायः कोऽपि सम्बन्ध शक्तिः, एकस्यानिरूपणे तदसिद्धेः, स्वरूपतः कार्यतः कारणतश्च पदपदार्थयोर्भेदं गृह्णतोऽपि शक्तिज्ञानोदयेनेतरेतराध्यासमूलकतादात्म्याधीनग्रहणताया असम्भवदुक्तिकत्वाच्च, गौरिति शब्दः इत्यादौ गकारादिघटितानुपूर्वीविशेषस्य गौरित्यर्थः इत्यादौ सास्नादिमदर्थस्य गौरितिज्ञानविषयतायाः शब्दादिप्रकृत्यक्रमस्य अर्थाच्च तादृशव्यवहारमात्रेणापादनतोऽध्यासस्य वक्तुमशक्यत्वाच्च, अन्यथा गोशब्दः सास्नादिमानित्यपि कदाचित्स्यादनुभवः । अतएव श्लोकः श्रुतः इत्यादौ श्रावणप्रत्यक्षस्यार्थः श्रुतः इत्यादौ च शाब्दबोधस्य श्रुतानुव्यवसायनम् । एकुम्भकारणप्रमर्थं 'अक्षरमम्बरान्तधृतः' इति मीमांसासूत्रभाष्यमालयात् । "हिमालयो नाम नगाधिराजः" "नचिकेता नाम पुत्र आस" इत्यादौ तु

तत्र नाद्यः—प्रत्येकं मिलितस्य चाऽव्यापकत्वात्, पृथक्प्रवृत्तिनिमित्ततायाञ्च वाक्यलक्षणाव्यापकत्वात्। नापि द्वितीयः, विभक्त्यर्थस्यानुगतस्याभावात्, "विभक्ति"

वाच्यतासम्बन्धेन हिमालयादेर्नाम्नो नगाधिराजादावन्वयोऽनुभवसिद्धो नत्वभेदेनेति यदर्थे यन्नाम्नो वाच्यतासम्बन्धेनान्वयस्तत्समानविभक्तिकत्वं तन्नामपदस्य इति व्युत्पत्तिः कल्प्यते, नामार्थयोरभेदान्वयव्युत्पत्तिविरोधस्तु नात्र प्रभुः, नाम्नो नामार्थत्वाभावात्। एतेन वृद्धिरादैच्, रामेतिद्व्यक्षरं नामेत्यादिकं व्याख्यातम्। मान्त्रिकपद्यस्यापि च शब्दसामान्यविचारे बृहदारण्यकभाष्ये व्यञ्जितया सूत्रभूततरत्नमादाय पदपदार्थयो सर्वथैक्यमेवेति कल्पनाया नावकाशः, वस्तुतः पृथग्भूतयोरेवापृथक्त्वप्रतीतेस्तत्त्वाभिप्रायविषयत्वात्। नापि तच्छब्दजन्यबोधविषयत्वनिष्ठप्रकारतानिरूपितधर्मिनिष्ठीयविशेष्यत्वतदर्थविषयकबोधजनकत्वनिष्ठप्रकारतानिरूपितेश्वरेच्छीयविशेष्यत्वञ्च वाच्यत्ववाचकत्वे, ईश्वरीयत्वनित्यत्व वा शाब्दोपयोगितया तु नोपादेयम्, तदप्रतीतावपि शाब्दोदयात्, न ह्यन्यतरेच्छा च शक्तिरिति, इदं वाक्यमिममर्थं बोधयत्वितीच्छामादायातिप्रसङ्गात्, न च पदस्वस्य शक्तेर्वा प्रवेशोऽत्र वाच्य', तयोरेव निरुच्यमानत्वात्, किञ्च वाच्यवाचकभावस्य सम्बन्धत्वेनानुभूयमानस्य सम्बन्धत्वेनाननुभूयमानतादृशनिशेष्यतात्मकत्वानुपपत्तेः, परम्परासम्बन्धे मानाभावात्, शाब्दबोधान्यथानुपपत्त्यानिर्वाच्यवादिनि वक्तुमशक्यत्वात्, सम्बन्धेनानिर्वचनीयेनैवोपपत्तेः। एवञ्च सङ्केतोऽपि न शक्तिः, तस्या इच्छात्मकतया सम्बन्धज्ञानविधया तज्ज्ञानस्य पदार्थोपस्थापकत्वानुपपत्तेः। ईश्वरसङ्केतज्ञानस्य शक्तिरित्युपदेशात्मकं शक्तिविषयक एव न तु तत्स्वरूपात्मक इति ध्येयमन्यत्र। अपि च व्युत्पित्सु' प्रयोज्ये प्रवृत्तिविशेषेण ज्ञानविशेषं कारणान्तरस्यानुपस्थिततया च तस्य शब्दविशेषजन्यत्वमनुमाय यदि शब्दोऽर्थमस्माद् स्यात्तद्विषयकज्ञानजनकः स्यादिति वितर्क्य शब्दार्थयोः सम्बन्धं निश्चिनुते इत्यविवादम्, पदार्थसम्बन्धं विनाऽनुपपन्नतया प्रतीताऽर्थविषयकज्ञानजनकता कथमर्थं सम्बन्धघटकतया प्रतिपत्तुं शक्नुयात्, अनुपपद्यमाना हि नोपपादककोटिमध्यासितुमीष्टे, अतएव "नहि यदनुपपत्त्या यत्कल्पनं तदेव तस्य विषयः" इति चिन्तामणावपूर्ववादे उक्तम्। एतदेवाभिसन्धाय तत्त्वप्रदीपिकायां चित्सुखाचार्यैः—"वाचकत्वं नाम तद्विषयकप्रतीतिजनकत्वं वाच्यत्वं च तज्जन्यप्रतीतिविषयत्वं, तदेवासति सम्बन्धे कथं स्यादितिपर्यनुयोगे तस्मादेव तत्प्रतीतिं ब्रुवाणः पण्डितगोष्ठीषु कथं नापत्रपते" ति कथाद्। केचित्तु—इच्छाया इव ज्ञानकृत्योरपि विनिगमनाविरहेण शक्तित्वं स्यादिति यद्यर्थवाचकत्वमुभयोः च प्रकारान्तराभावादनुपपन्नं तर्हि ज्ञानादीनामपि शक्तिकल्पनान्नापाद्यम् कार्यकारणभावपरम्परासङ्ग इति महद्गौरवम्। एवमिदमस्माद् बोधयत्वितीच्छाविषयत्वमेव जनकत्वं स्यादिति बहूपप्लवं, प्रमाणानां जनकतातद्घटितातिरिक्तसम्बन्धेनैव प्रमेयसङ्गताना ज्ञानजनकत्वं दृष्टमिति नेह तयोः सम्बन्धतौचिती, अन्यथा धूमाद्वह्निज्ञानं जायतामितीच्छाविषयत्वमेव हेतुसाध्ययोः सम्बन्धः स्यादिति व्याप्त्युच्छेद इत्यपि—वदन्ति। एतेन यदीयवृत्तिज्ञानीयविषयतेत्यादिकमपि निरस्तम्, वृत्तेः शक्तिलक्षणान्यतरात्मकत्वेन शक्तेरनिरुक्तौ तदनिरुक्तेः, लक्षणाया अपि शक्तिघटितत्वाच्चेत्यलं पल्लवेन। प्रत्येकमित्यादि। सुबन्तस्यैव पदत्वे तिङन्ते, तिङन्तस्यैव पदत्वे च सुबन्तेऽव्याप्तिः, सुबन्तत्वे सति तिङन्तत्वं तु लोकेऽसम्भवग्रस्तम्। न च सुप्तिङन्यतरान्तत्वं विवक्षणीयम्, अन्यतरत्वस्यानुपदं निरस्तत्वात्। ननु पदपदस्य सुबन्तत्वतिङन्तत्वरूपनानाप्रवृत्तिनिमित्तकत्वोपगमे नाऽमी दोषा इष्यत आह पृथगिति। वाक्यलक्षणेति। वाक्यलक्षणे सुबन्तसमुदायो वा तिङन्तसमुदायो वा सुबन्ततिङन्तसमुदायो वा प्रवेशनीयः, आद्ये त्वया शयितव्य'मित्यादौ, द्वितीये च 'पचति

रित्यनेन सुप्तिङो. "प्राक्दिशो विभक्ति" रित्यनेन च तसिलादे. पृथक्पृथगेव विभक्ति

---

भवती'त्यादे सङ्ग्रहेऽपि 'चैत्र पचती'त्यादेरसङ्ग्रह । तृतीये तु 'चैत्र पचता'त्यादे सङ्ग्रहेऽपि 'चैत्र' इत्येतावन्मात्रादेरलक्षणताया एवाभ्युपगमनीयत्वेन तदसङ्ग्रहस्य हानिकरत्वविरहेऽपि 'त्वया शयितव्यम्' 'पचति भवती'त्यादे कथ सङ्ग्रह, द्वितीयलक्षणे वक्ष्यमाणानि दूषणानि चेहानुसन्धेयानि। किञ्च सुबन्तत्वं स्वघटकत्वस्वघटकोत्तरत्वस्वघटकपूर्वत्वाभावत्रयसम्बन्धे सुब्वृत्तित्वं वा, तत्वेन प्रतिसन्धीयमानत्वं वा स्वपूर्ववृत्तीतरेण स्वेतरेणाघटितस्वस्वघटितस्वस्वपूर्ववृत्तिघटि तत्वेति सम्बन्धे' सुबुपलक्षितत्वं वा, नाद्य, दध्यादिशब्दस्याव्ययभावाच्च पदत्वाना पत्ते । अतएव न द्वितीय, अव्ययेषु विभक्तिप्रतिसन्धानस्यानियतत्वात्, तथा चाव्ययव्यक्तिविशेषेऽव्याप्ति । न तृतीय भातिसुबुपलक्षितकेवलप्रकृतेरपि पदत्वापत्तेः, शक्तं पदमिति भवतानभ्युपग मात् । किञ्चेदं सुप्त्वम्, न तावत्स्वाद्यन्यतमत्वम्, स्वादिभक्तीनामानन्त्येनासर्वज्ञाज्ञेयत्वप्रसक्ते, न च सुप्त्वाविनाऽनुगम, तस्याप्यननुगतस्य दुर्वचत्वात्, अनुगतधर्ममात्रस्य साक्षात्कारित्वखण्डने निराकृतत्वाच्च, अतएव सुप्त्वादिकं न जातिविशेष तस्य जातित्वे साधकाभावाच्च, सुप्त्वादिना साङ्कर्यप्रसङ्गाच्च, सुप्त्व विहाय सुप्त्व सुप्युवाचके सुशब्दे सुप्त्व विहाय सुप्त्व असादौ, उभयो समा वेश प्रथमैकवचने इति । साधकाभावे च जातिमानत्वमुपेत्य न सङ्करपरिहारसम्भव । न च शक्ति सम्बन्धेन सुप्त्वम्, पाणिन्यादिसङ्केतेनैवोपपत्तौ शक्तेरप्रामाणिकत्वात्, न च सङ्केतसम्बन्धेन सुप्त्वम्, अन्यत्रापि कस्यचित्सङ्केतसम्भवेनातिप्रसङ्गात् । पाणिनिसङ्केतवत्त्वस्य व्याकरणान्तरप्रणेतृ तत्सङ्केतमादाय विनिगमनाविरहेणासङ्गते । एतेन तिङन्तत्व व्याख्यातम् । एतेन कारकान्वित क्रियाशाब्दजनकशब्दसमुदायो वाक्यम्, अत्र च पदत्वविवक्षया निष्प्रयोजनत्वेन नोक्तखण्डन सावकाशम् नच वस्तुत पाकक्रियाया कारकान्वितत्वात्पचतीत्येतावन्मात्र वाक्य स्यात्, न स्यात्, साक्षात्परम्परया वा कारकविषयतानिरूपितक्रियाविषयताशालिशाब्दस्य विवक्षितत्वादित्यपि नाशङ्क नीयम्, उक्तन्यायेनैव क्रियात्वखण्डनस्य करणत्वखण्डनेऽभिहितत्वात् । अतएव तद्घटितकारकत्व स्यापि दुर्वचत्वम्, वह्निमनुमिनोतीत्यादौ वह्न्यादेरकारकतयाऽव्याप्तिश्च । अनेकपदोपस्थापकत्वविवक्षया दण्डरीत्याऽसम्भवेन योग्यताविवक्षणे गौरित्यादेरप्युक्तरीत्याऽसम्भवलक्ष्यभावस्य वाक्यतापत्तेश्च, ग्राम गच्छतीत्येतदेकदेशस्यापि ग्राम गच्छेत्यस्य वाक्यत्वापत्तेश्च, आनुपूर्वीविशेषावच्छिन्नायाः तत्तादृशकाया पर तादृशशाब्दजनकयोग्यतायास्तत्र सद्भावात्, एवञ्च पदत्वमवश्य विवक्ष्यम् । योग्यतावच्छेदकतया ऽऽकाङ्क्षाया अवश्यापेक्षणीयत्वेन कारकान्वितक्रियेत्यस्य वैयर्थ्यञ्चेति । विभक्तिरिति । "विभक्तिश्चे" तिसूत्रैकदेशोऽयम् । पृथक्पृथगेवेति । अनुगतधर्मानवच्छिन्नीकृत्यैवेत्यर्थं । अन्यथा पृथग्विधाना [illegible] । यद्वा सुप्तिङोरपि [illegible], [illegible] तसिलाद्यन्तभावेन [illegible] । यद्यपि तसिलाद्यन्तानां "तद्धितश्चासर्वविभक्ति"रित्यनेनाव्ययतया सुपो लुकि तदन्ततयैव सङ्ग्रह इति "विभक्त्यन्ता पद"मित्यत्र सुप्तिङ्रूपैव विभक्तिर्विवक्षिता तथापि प्रत्येकमिलितविकल्पानुपपत्तेरुक्ताया परिहाराय विभक्तिसञ्ज्ञात्वेन सुप्तिङोरुपादान तत्रादृतम्, विभक्तिसञ्ज्ञकत्वं ■ तयोरिव तसिला देरपीति तदन्तर्भावेणापि प्रत्येकमिलितविकल्पानुपपत्ते प्रदर्शनाय तसिलादिविभक्तिपर्यन्तानुधावनम् । अननुगमस्य द्वयोरपि विभक्तिसञ्ज्ञकयोर्भागरूपत्वात् । ननु सङ्केतसम्बन्धेन विभक्तिपदवत्त्वं सुबादिसा धारणम्, विभक्तिपदार्थ ■ यावान् न वा सुबेव वा तसिलादिरेव वा तिङेव वा विवक्षितो येनाव्या प्त्यतिप्रसङ्गो वा भवेत् अपि तु विभक्तिपदवत्त्वेन रूपेण यथासम्भव य कोऽपि, स च सुब्वा वा

संज्ञाविधानात्, शब्दसाम्येन च लक्षणायोगात्। किञ्च वर्णा इति बहुत्वस्य विवक्षितत्वेऽहमित्यादेरपदत्वप्रसङ्गः, अविवक्षितत्वे देवदत्त इत्यन्ताकारस्य पदत्वापातः, तस्य विभक्त्यन्तत्वात्। सार्थकस्तथेति चेत्, भवतीत्यादौ शबकारादीनां पदत्वप्रसङ्गः, शपः सार्थकत्वात्। यत्र विहिता विभक्तिस्तदिति चेन्न, शबकारं परित्यज्य पदत्वप्रसङ्गात्।

---

लिङ्वा लक्ष्यमात्रस्याप्येवेत्याशङ्क्याह शब्दसाम्येनेति। विभक्तिपदवत्त्वेनेत्यर्थः। घटितत्वं तृतीयार्थो लक्षणान्वयी। सुबादौ विभक्तिपदवत्त्वं नित्यसङ्केतसम्बन्धेन वा, अनित्यसङ्केतसम्बन्धेन वा, आद्ये मानाभावः, द्वितीयस्य तु सुबाद्यतिरिक्तेऽपि सम्भवेनातिप्रसङ्गः, पाणिनिसङ्केतस्य ■ सम्बन्धताया व्याकरणप्रणेतृपुरुषान्तरसङ्केतमादायाविनिगमकत्वम्, न वा पाणिनेः पुरा पदत्वं न समपद्यतेत्याशयः। एवं विभक्त्यन्तत्वमपि सुबन्तत्ववद्विकल्प्य निराकार्यम्। केचित्तु विभक्तिः = वृत्तिः, अन्तः = सम्बन्धो येषां ते विभक्त्यन्ता", तथा च वृत्तिमत्त्वं पदत्वमिति सूत्राशयं वर्णयन्ति। एतन्निरासस्तु निवेदित एवेति न काचित्क्षतिः। प्रसङ्ग इति। वर्णपदेनाक्षरात्मकस्ताल्वादिव्यापारजन्यत्वमिदम् अन्यथा तु वासुदेवादिवाक्यकाकारादावव्याप्तिरिष्टापत्तिः। अतो हलो वा बहुत्वं विवक्षितमिति विकल्प्येदमित्यपि कश्चित्। इत्यन्ताकारस्य = इत्यत्र चरमाकारस्य। विसर्गसहितस्येति शेषः। विभक्त्यन्तत्वात् = स्वघटकत्वघटकोत्तरत्वस्वघटकपूर्वत्वाभाववत्त्वसम्बन्धैर्विभक्तिमत्त्वात्। 'सार्थक' इति। बहुत्वाविवक्षायाः प्रस्तुतत्वादेकवचनम्। विभक्त्यन्त इति शेषः। तथा = पदम्। शबकारादीनामिति। आदिना श्यन्नकारादेः परिग्रहः। तिबादिविभक्तिसहितानामिति शेषः। शपः = शबादेः। तिबादिघटितस्येति शेषः। सार्थकत्वादिति। भवतीत्येतद्घटकशब्दबोध्यार्थविशेषणत्वादित्यर्थः। एतेन —शपो न सार्थकत्वं मानाभावात्, कर्तरि शबिति सूत्रस्य हि कर्तरि प्रतिपाद्ये धातोः शबिति नार्थः, अपि तु कर्त्रर्थविहिते सार्वधातुके परे धातोः शबिति। न च कर्तृपदस्य लक्षणया त्वयमर्थो न युज्यते, निष्प्रयोजनत्वात्, भावकर्मणोस्तु शपो यका बाधादेव न दोष इति वाच्यम्, तदर्थककर्तृपदस्य "दिवादिभ्यः श्यन्" इत्यादावनुवृत्त्यर्थत्वात्, अन्यथा यक् पुरस्तादपवादन्यायेन शप एव बाधक इति भावकर्मणोरपि दिवादिभ्यः श्यन् स्यात्। अथैवमुक्तानुशासनस्य शपः सार्थकत्वे प्रामाण्याभावेऽपि पचतीत्यादौ कर्तुः कृतेर्वा प्रतिपादने तिपा सह शपोऽविनिगम्यत्वम्, तद्भेदे नान्यतरवैयर्थ्यमिति न्यायात्, न चात्तीत्यादौ विकरणं विनापि कर्तुः कृतेर्वा बोधात्तिङैवेति वाच्यम्, गच्छेत्यादौ तिङभावेऽपि तद्बोधेन साम्यात्, यः शिष्यते स लुप्यमानार्थाभिधायीति न्यायेन प्रकृतेरेव तत्र कर्त्राद्यभिधायकत्वकल्पने लुप्तप्रतिसन्धानेनैव वा तद्बोधकल्पनेऽपि तौल्यमेवेति चेन्न, एकत्र निर्णीतस्य शास्त्रार्थस्यान्यत्रापि सञ्चारणीयत्वेन विकरणानुपस्थितिस्थले तिङादौ विकरणानां कर्त्राद्यभिधायकत्वकल्पनानुदयेनान्यत्रापि तेषां समभिव्याहृततिङादिशक्तबोधकत्वरूपद्योतकत्वस्य वा प्रयोगसाधुतामात्रप्रयोजकत्वस्यैव वा कल्पनीयत्वात्, अतएव "सार्वधातुके य"गिति सूत्रभाष्ये विकरणानां सार्थकतां नानुमेने पतञ्जलिरित्यादिशङ्कानां नावकाशः। न च—तथापि कथञ्चिच्छा-ब्दबोधौपयिकत्वमात्रेण शबादेः सार्थकत्वाभिधानं मूलकृतोऽनुचितम्, देवदत्त इत्यादावपि विसर्ग-सहिताकारस्य तदधीनशाब्दबोधौपयिकतया वदितुं शक्यत्वेन तादृशसार्थकत्वस्याव्यावर्तकत्वादिति—वाच्यम्, यतः सार्थकत्वं निवेशयितुं प्रवृत्तस्य भवत एव शिरस्येष प्रहारः स्यात्। नहि वृत्त्या बोधकत्वं वृत्तिमत्त्वं शक्तत्वं चेह सार्थकत्वं शक्यनिवेशम्, सुबाद्यन्तसमुदायस्य पदत्वेनाभिविवक्षितस्य तथात्वे मानाभावात्केवलप्रकृत्यादेरेव शक्तत्वाभ्युपगमात्। एवञ्च देवदत्तोगच्छतीत्यादिसमुदायेऽव्याप्तिः। तथा च सार्थकत्वनिवेशोऽकिञ्चित्कर एवेति भावः। अतएव तत्परित्यज्यैवाशङ्कते यत्रेति।

रित्यनेन सुप्तिङो· "प्राक्दिशो विभक्ति" रित्यनेन च तसिलादे· पृथक्पृथगेव विभक्ति

भवती'त्यादे सङ्ग्रहेऽपि 'चैत्र पचती'त्यादेरसङ्ग्रह । तृतीये 'चैत्र पचती'त्यादे सङ्ग्रहेऽपि 'चैत्र' इत्येतावन्मात्रादेरलक्षणताया एवाभ्युपगमनीयत्वेन तदसङ्ग्रहस्य हानिकरत्वविरहेऽपि 'त्वया शयितव्यम्' 'पचति भवती'त्यादे कथं सङ्ग्रह , द्वितीयलक्षणे वक्ष्यमाणानि दूषणानि चेहानुसन्धेयानि। किञ्च सुबन्तत्वं स्वघटकत्वस्वघटकोत्तरत्वस्वघटकपूर्वत्वाभाववत्त्वसम्बन्धै सुब्वृत्तित्वं वा, तत्वेन प्रतिसन्धीयमानत्वं वा स्वपूर्ववृत्तीतरेण स्वेतरेणाघटितत्वस्वघटितत्वस्वपूर्ववृत्तित्वै तत्वेति सम्बन्धैः सुबुपलक्षितत्वं वा, नाद्य, दध्यादिशब्दद्वयात्मकस्यानान्व पदत्वाना पत्ते । अतएव न द्वितीय , अव्ययेषु विभक्तिप्रतिसन्धानस्यानियतत्वात्, तथा चाव्ययव्यक्तिविशेषेऽव्याप्ति । न तृतीय भाविसुबुपलक्षितकेवलप्रकृतेरपि पदत्वापत्तेः, अर्थ पचमिनि भवतानभ्युपगमात् । किञ्चेदं सुप्त्वम्, न तावत्स्वाद्यन्यतमत्वम्, स्वादिष्वसीमामानन्त्येनासर्वज्ञाज्ञेयत्वप्रसक्ते , न च सुत्वादिनाऽनुगम , तस्याप्यननुगतस्य दुर्वचत्वात्, अनुगतधर्ममात्रस्य साक्षात्कारित्वखण्डने निरासत्वाच्च, अतएव सुप्त्वादिकं न जातिविशेष तस्य जातित्वे साधकाभावाच्च, सुत्वाविना साङ्कर्यप्रसङ्गाच्च, सुप्त्व विहाय सुत्व सुप्वाचके सुशब्दे सुत्व विहाय सुप्त्व असादौ, उभयो समावेश प्रथमैकवचने इति । साधकाभावे च जातिनानात्वमुपेत्य न सङ्करपरिहारसम्भव । न च शक्तिसम्बन्धेन सुप्त्वम्, पाणिन्यादिसङ्केतेनैवोपपत्तौ शक्तेरप्रामाणिकत्वात्, न च सङ्केतसम्बन्धेन सुप्त्वम्, अन्यत्रापि कस्यचित्सङ्केतसम्भवेनातिप्रसङ्गात । पाणिनिसङ्केतवत्त्वस्य व्याकरणान्तरप्रणेतृसङ्केतमादाय विनिगमनाविरहेणासङ्गते । एतेन तिङन्तत्व व्याख्यातम् । एतेन कारकान्वितक्रियाबोधजनकशब्दसमुदायो वाक्यम्, अत्र च पदत्वविवक्षाया निष्प्रयोजनत्वेन नोक्तखण्डनसावकाशम्, नच वस्तुत पाककियाया कारकान्वितत्वात्पचतीत्येतावन्मात्र वाक्य स्यात्, न स्यात्, साक्षात्परम्परया वा कारकविषयतानिरूपितक्रियाविषयताशालिबोधजनकत्वस्य विवक्षितत्वादित्यपि नाशङ्कनीयम्, उक्तन्यायेनैव क्रियान्वयखण्डनस्य करणखण्डनेऽभिहितत्वात् । अतएव तद्घटितकारकत्वस्यापि दुर्वचत्वम्, वह्निमनुमिनोतीत्यादौ वह्न्यादेरकारकतयाऽव्याप्तिश्च । जनकपदेनोपधायकत्वविवक्षाया उक्तरीत्याऽसम्भवेन योग्यताविवक्षणे गौरित्यादरप्युक्तरीत्याऽसम्भवलक्षणभावस्य वाक्यतापत्तेश्च, ग्रामं गच्छतीत्येतदेकदेशस्यापि ग्रामं गच्छत्वस्य वाक्यत्वापत्तेश्च, आनुपूर्वीविशेषावच्छिन्नायास्तदात्मिकाया वा तादृशबोधजननयोग्यतायास्तत्र सद्भावात्, एवञ्च पदत्वमवश्य विवक्ष्यम् । योग्यतावच्छेदकतयाऽऽकाङ्क्षाया अवश्यापेक्षणीयत्वेन कारकान्वितक्रियेत्यस्य वैयर्थ्यञ्चेति । विभक्तिरिति । "विभक्तिश्चे" तिसूत्रैकदेशोऽयम् । पृथक्पृथगेवेति । अनुगतधर्मानवच्छेदकीकृत्यैवेत्यर्थ । अन्यथा पृथग्विधानाभिधानस्याकिञ्चित्करत्वात् । यदा सुप्तिङोरपि नानुगम , तदा सुतरां तसिलाद्यन्तर्भावेन तयो । यद्यपि तसिलाद्यन्तानां "तद्धितश्चासर्वविभक्ति"रित्यनेनाव्ययतया सुपो लुकि तदन्ततयेव सङ्ग्रह इति "विभक्त्यन्तं पद"मित्यत्र सुप्तिङ्रूपैव विभक्तिर्विवक्षिता तथापि प्रत्येकमिलितविकल्पानुपपत्तेरुक्ताया परिहाराय विभक्तिसञ्ज्ञात्वेन सुप्तिङोरुपादान तत्राहतम्, विभक्तिसञ्ज्ञकत्व तु तयोरिव तसिलादेरपीति तदन्तर्भावेणापि प्रत्येकमिलितविकल्पानुपपत्ते प्रदर्शनाय तसिलादिविभक्तिपर्यन्तानुधावनम् । अननुगमस्य द्वयोरपि विभक्तिसञ्ज्ञकयोर्भागरूकत्वात् । ननु सङ्केतसम्बन्धेन विभक्तिपदवत्त्वं सुबादिसाधारणम्, विभक्तिपदवाच्य न यावान् न वा सुबेव वा तसिलादिरेव वा तिङेव वा विवक्षितो येनाव्याप्तिरसम्भवो वा भवेत् अपि तु विभक्तिपदवत्वेन रूपेण यथासम्भव य कोऽपि, स च सुब्वा वा

संज्ञाविधानात्, शब्दसाम्येन च लक्षणायोगात्। किञ्च वर्णा इति बहुत्वस्य विवक्षि-तत्वेऽहमित्यादेरपदत्वप्रसङ्गः, अविवक्षितत्वे देवदत्त इत्यन्ताकारस्य पदत्वापातः, तस्य विभक्त्यन्तत्वात्। सार्थकस्तथेति चेत्, भवतीत्यादौ शबकारादीनां पदत्वप्रसङ्गः, शपः सार्थकत्वात्। यत्र विहिता विभक्तिस्तदितिचेन्न, शबकारं परित्यज्य पदत्वप्रसङ्गात्।

---

तिङ्वा लक्ष्यमात्रव्याप्यैवेत्याशङ्क्याह शब्दसाम्येनेति। विभक्तिपदवत्त्वेनेत्यर्थः। घटितत्वं तृतीयार्थो लक्षणान्वयी। सुबादौ विभक्तिपदवत्त्वं नित्यसङ्केतसम्बन्धेन वा, अनित्यसङ्केतसम्बन्धेन वा, आद्ये मानाभावः, द्वितीयस्य तु सुबाद्यतिरिक्तेऽपि सम्भवेनातिप्रसङ्गः, पाणिनिसङ्केतस्य सम्बन्धताया व्याकरणप्रणेतृपुरुषान्तरसङ्केतसाधारण्याविनिगमकत्वम्, न वा पाणिनेः पुरा पदत्वं न समपद्यतेत्याशयः। एवं विभक्त्यन्तत्वमपि सुबन्तत्ववद्विकल्प्य निराकार्यम्। केचित्तु विभक्तिः = वृत्तिः, अन्तः = सम्बन्धो येषां ते विभक्त्यन्ताः, तथा च वृत्तिमत्त्वं पदत्वमिति सूत्राशयं वर्णयन्ति। एतन्निरासस्तु निवेदित एवेति न काचित्क्षतिः। प्रसङ्ग इति। वर्णपदेनाक्षरात्मकसार्थकहल्विवक्षायामिदम्, अन्यथा तु वासुदेवादिवाचककाराद्यावव्याप्तिः स्यात्। अचां हलां वा बहुत्वं विवक्षितमिति विकल्प्येदमित्यपि कश्चित्। इत्यन्ताकारस्य = इत्यत्र चरमाकारस्य। विसर्गसहितस्येति शेषः। विभक्त्यन्तत्वात् = स्वघटकत्वस्वघटकोत्तरत्वस्वघटकपूर्वत्वाभावत्वसम्बन्धैर्विभक्तिवृत्तित्वात्। 'सार्थक इति। बहुत्वाविवक्षायाः प्रस्तुतत्वादेकवचनम्। विभक्त्यन्त इति शेषः। तथा = पदम्। शबकारा-दीनामिति। आदिना श्यन्यकारादेः परिग्रहः। तिबादिविभक्तिसहितानामिति शेषः। शपः = शबादेः। तिबादिसहितस्येति शेषः। सार्थकत्वादिति। भवतीत्येतद्घटकशब्दद्योधौपयिकत्वादि-त्यर्थः। एतेन —शपो न सार्थकत्वं मानाभावात्, कर्तरि शबिति सूत्रस्य हि कर्तरि प्रतिपाद्ये धातोश्शबिति नार्थः, अपि तु कर्तृवाचिनि सार्वधातुके परे धातोः शबिति। न च कर्तृपदस्य लक्षणया द्व्यमर्थो न युज्यते, निष्प्रयोजनत्वात्, भावकर्मणोस्तु शपो यका बाधादेव न दोष इति वाच्यम्, उक्तार्थकर्तृपदस्य "दिवादिभ्यः श्यन्" इत्यादावनुवृत्त्यर्थत्वात्, अन्यथा यक् पुरस्तादपवादन्यायेन शप एव बाधक इति भावकर्मणोरपि दिवादिभ्यः श्यन् स्यात्। अथैवमुक्तानुशासनस्य शपः सार्थकत्वे प्रामाण्याभावेऽपि पचतीत्यादौ कर्तुः कृतेर्वा प्रतिपादने तिपा सह शपोऽविनिगमकत्वम्, सम्भेदे नान्यतरवैयर्थ्यमितिन्यायात्, नचात्तीत्यादौ विकरणं विनापि कर्तुः कृतेर्वा बोधाद्विनिगमनेति वाच्यम्, तत्रैत्यादौ तिबाद्यभावेऽपि तद्बोधेन साम्यात्, यः शिष्यते स लुप्यमानार्थाभिधायीतिन्यायेन प्रकृतेरेव तत्र कर्त्राद्यभिधायकत्वकल्पने लुप्तप्रतिसन्धानेनैव वा तद्बोधकल्पनेऽपि तौल्यमेवेतिचेन्न, एकत्र निर्णीतस्य शास्त्रार्थस्यान्यत्रापि सञ्चारणीयत्वेन विकरणानुत्पत्तिस्थले लिङादौ विकरणानां कर्त्राद्यभिधायकत्वकल्पनानुदयेनान्यत्रापि तेषां समभिव्याहृततिङ्शक्त्युद्बोधकत्वरूपद्योतकत्वस्य वा प्रयोगसाधुतामात्रप्रयोजकत्वस्यैव वा कल्पनीयत्वात्, अतएव "सार्वधातुके य"गिति सूत्रभाष्ये विकरणानां सार्थकतां नानुमेने पतञ्जलिरित्यादिशङ्कानां नात्रावतारः। नच—तथापि कथञ्चिच्छा-ब्दबोधौपयिकत्वमात्रेण शबादेः सार्थकत्वाभिधानं मूलकृतोऽनुचितम्, देवदत्त इत्यादावपि विसर्ग-सहिताकारस्य तद्घटकशब्दबोधौपयिकतया वक्तुं शक्यत्वेन तादृशसार्थकत्वस्याव्यावर्तकत्वादिति—वाच्यम्, यतः सार्थकत्वं निवेशयितुं प्रवृत्तस्य भवत एव शिरस्येष प्रहारः स्यात्। नहि वृत्त्या बोधकत्वं वृत्तिमत्त्वं शक्तत्वं वेह सार्थकत्वं शक्यनिवेशम्, सुबाद्यन्तसमुदायस्य पदत्वेनाभिधित्सितस्य तथात्वे मानाभावात्केवलप्रकृत्यादेरेव शक्तत्वाभ्युपगमात्। एवञ्च देवदत्तोगच्छतीत्यादिसमुदायेऽप्यनिर्व्याप्तिः। तथा च सार्थकत्वनिवेशोऽकिञ्चित्कर एवेति भावः। अतएव तत्परित्यज्यैवाशङ्कते यत्रेति।

रित्यनेन सुप्तिङो "प्राक्दिशो विभक्ति" रित्यनेन च तसिलादेः पृथक्पृथगेव विभक्ति

---

भवतीत्यादेः सङ्ग्रहेऽपि 'चैत्र पचती'त्यादेरसङ्ग्रहः । तृतीये तु 'चैत्र पचती'त्यादेः सङ्ग्रहेऽपि 'चैत्र' इत्येतावन्मात्रादेरलक्षणताया एवाभ्युपगमनीयत्वेन तदसङ्ग्रहस्य हानिकरत्वविरहेऽपि 'त्वया शयितव्यम्' 'पचति भवती'त्यादेः कथं सङ्ग्रहः, द्वितीयलक्षणे वक्ष्यमाणानि दूषणानि चेहानुसन्धेयानि। किञ्च सुबन्तत्वं स्वघटकत्वस्वघटकोत्तरत्वस्वघटकपूर्वत्वाभाववत्त्वसम्बन्धैः सुब्वृत्तित्वं वा, तत्त्वेन प्रतिसन्धीयमानत्वं वा स्वपूर्ववृत्तीतरेण स्वेतरेणाघटितत्वस्वघटितत्वस्वपूर्ववृत्तित्वाभावत्त्वेति सम्बन्धैः सुब्बुपलक्षितत्वं वा, नाद्यः, दध्यादिशब्दस्याव्ययानाञ्च पदत्वानापत्तेः । अतएव न द्वितीयः, अव्ययेषु विभक्तिप्रतिसन्धानस्यानियतत्वात्, तथा चाऽव्ययव्यक्तिविशेषेऽव्याप्तिः । न तृतीयः आदिसुब्बुपलक्षितकेवलप्रकृतेरपि पदत्वापत्तेः, सर्वं पदमिति भवतामभ्युपगमात् । किञ्चेदं सुप्त्वम्, न तावत्स्वाद्यन्यतमत्वम्, स्वादिव्यक्तीनामानन्त्येनासर्वज्ञदुर्ज्ञेयत्वप्रसक्तेः, न च सुत्वादिनाऽनुगमः, तस्याप्यननुगतस्य दुर्वचत्वात्, अनुगतधर्ममात्रस्य साक्षात्कारित्वखण्डने निरस्तत्वाच्च, अतएव सुप्त्वादिकं न जातिविशेषः तस्य जातित्वे साधकाभावाच्च, सुत्वादिना साङ्कर्यप्रसङ्गाच्च, सुप्त्वं विहाय सुत्वं सुप्प्रत्ययके सुशब्दे सुत्वं विहाय सुप्त्वं जसादौ, उभयोः समावेशः प्रथमैकवचने इति । साधकाभावे च जातिनानात्वमुपेत्य न सङ्करपरिहारसम्भवः । न च शक्तिसम्बन्धेन सुब्वत्त्वम्, पाणिन्यादिसङ्केतेनैवोपपत्तौ शक्तेरप्रामाणिकत्वात्, न च सङ्केतसम्बन्धेन सुब्वत्त्वम्, अन्यत्रापि कस्यचित्तत्सङ्केतसम्भवेनातिप्रसङ्गात् । पाणिनिसङ्केतवत्त्वस्य व्याकरणान्तरप्रणेतृतत्सङ्केतमादाय विनिगमनाविरहेणासङ्गतेः । एतेन तिङन्तत्वं व्याख्यातम् । एतेन कारकान्वितक्रियाशाब्दजनकशब्दसमुदायो वाक्यम्, अत्र च पदत्वविवक्षाया निष्प्रयोजनत्वेन नोक्तखण्डनसावकाशम्, न च वस्तुतः पाकक्रियाया कारकान्वितत्वात्पचतीत्येतावन्मात्रं वाक्यं स्यात्, न स्यात्, साक्षात्परम्परया वा कारकविषयतानिरूपितक्रियाविषयताशालिशाब्दस्य विवक्षितत्वादित्यपि नाशङ्कनीयम्, उक्तन्यायेनैव क्रियाखण्डनस्य करणखण्डनेऽभिहितत्वात् । अतएव तद्घटितकारकत्वस्यापि दुर्वचत्वम्, वह्निमनुमिनोतीत्यादौ वह्न्यादेरकारकतयाऽव्याप्तिश्च । जनकत्वेनोपधायकत्वविवक्षाया उक्तरीत्याऽसम्भवेन योग्यताविवक्षणे गौरित्यादावप्युक्तरीत्याऽसम्भवलक्ष्यभावस्य वाक्यतापत्तेश्च, ग्राम गच्छतीत्येतदेकदेशस्यापि ग्राम गच्छेत्यस्य वाक्यत्वापत्तेश्च, आनुपूर्वीविशेषावच्छिन्नायास्तादृशिकाया वा तादृशशाब्दजननयोग्यतायास्तत्र सद्भावात्, एवञ्च पदत्वमपदस्य निर्वाच्यम् । योग्यतावच्छेदकतयाऽऽकाङ्क्षाया अवश्यापेक्षणीयत्वेन कारकान्वितक्रियेत्यस्य वैयर्थ्यञ्चेति । विभक्तिरिति । "विभक्तिश्चे"तिसूत्रैकदेशोऽयम् । पृथक्पृथगेवेति । अनुगतधर्ममनवच्छेदकीकृत्यैवेत्यर्थः । अन्यथा पृथग्विधानाभिधानस्याकिञ्चित्करत्वात् । यदा सुप्तिङोरपि नानुगमः, तदा नतरां तसिलाद्यन्तर्भावेण तयोः । यद्यपि तसिलाद्यन्तानां "तद्धितश्चासर्वविभक्ति"रित्यनेनाव्ययतया सुपो लुकि तदन्ततयैव सङ्ग्रह इति "विभक्त्यन्तं पद"मित्यत्र सुप्तिङ्रूपैव विभक्तिर्विवक्षिता तथापि प्रत्येकमिलितविकल्पानुपपत्तेरुक्ताया परिहाराय विभक्तिमात्रत्वेन सुप्तिङोरुपादानं तत्रावश्यकम्, विभक्तिसञ्ज्ञकत्वं तु तयोरिव तसिलादेरपीति तदन्तर्भावेणापि प्रत्येकमिलितविकल्पानुपपत्तेः प्रदर्शनाय तसिलादिविभक्तिपर्यन्तानुधावनम् । अननुगमस्य द्वयोरपि विभक्तिसञ्ज्ञकयोर्जागरूकत्वात् । ननु सङ्केतसम्बन्धेन विभक्तिपदवत्त्वं सुबादिसाधारणम्, विभक्तिपदबोध्य न यावत् न वा सुबत्र वा तसिलादिरेव वा निवेश्य विवक्षितो येनाव्याप्तिरसम्भवो वा भवेत् अपि तु विभक्तिपदवत्त्वेन रूपेण यथासम्भवं यः कोऽपि, स च सुब्वा वा

श्रयाना गगनाभाववत्त्वावच्छिन्नप्रकारतानिरूपितावच्छिन्नविशेष्यताशालिनिश्चयत्वेनानुगतरूपेणैव प्रति-बन्धकतया गगनाभाववद्घटत्वावच्छिन्नविषयिताप्रयोज्यायां तादृशोभयाभावप्रयोजिकायां पक्षे साध्यव-त्त्वावगाहित्वाभावाधिकरणतायां गगनाभाववत्पटादिरूपविशिष्टान्तरविषयितात्वव्यापकगगनाभाववत्त्वाव-च्छिन्नप्रकारतानिरूपितावच्छिन्नविशेष्यतात्वावच्छिन्नप्रयोजकतानिरूपितप्रयोज्यतायाः सत्त्वात्स्वपदेन गगनाभाववद्घटादेर्ग्रहीतुमशक्यत्वाद्व्याप्तिवारणाय तु विशिष्टान्तरविषयितायां स्वावच्छिन्नविषयित्वाव्या-पकविषयिताशून्यज्ञानीयत्वमुपादेयमधिकं स्वन्यत्रानुसन्धेयमिति परास्तम् । अत्र यदि स्वावच्छिन्नविष-यकप्रतीतिविषयतावच्छेदकत्वसमानाधिकरणावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतानिरूपकविषयतानिष्ठा-वच्छेदकतानिरूपकवृत्तित्वनिष्ठावच्छेदकतानिरूपकभेदनिष्ठावच्छेदकतानिरूपकप्रतियोगितानिष्ठावच्छेदकता-निरूपकावच्छेदकतात्वावच्छिन्नप्रतियोगिताकाभाववद्रूपावच्छिन्नप्रयोजकतानिरूपितप्रयोज्यता नास्तीति-धीसिद्धः सामान्याभावो विवक्षितस्तदा स्मृत्यन्यत्वखण्डनसञ्चारः, यदि ▇ विशेषाभावः, तदा मेयत्वविशिष्टव्यभिचारत्वावच्छिन्नविषयिताप्रयोज्यायां तादृशोभयाभावप्रयोजकहेतुधर्मिकव्याप्यत्वाव-गाहित्वाभावाधिकरणतायां तादृशव्यभिचारत्वावच्छिन्नविषयकप्रतीतिविषयतावच्छेदकबाधत्वावच्छिन्न-विषयिताव्यापकरूपावच्छिन्नप्रयोज्यत्वसत्त्वेनातिव्याप्तितादवस्थ्यम् ।

एवेन जातिमान् वह्न्यभाववानित्यादिज्ञानस्यापि वह्न्यभाववद्ध्रदत्वाद्यवच्छिन्नविषयकत्वात् ह्रदो वह्निमानित्यनुमित्यप्रतिबन्धकत्वाद्व्याप्त्यसम्भवोऽपि समर्थितः । न च यद्रूपावच्छिन्नविषयितात्वं यद्रूपविशिष्टविषयकत्वसमानाधिकरणाभावप्रतियोगितावच्छेदकं तद्रूपावच्छिन्नविषयिताशून्ययद्रूपवि-शिष्टविषयकनिश्चयत्वं प्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्ति तद्रूपवत्त्वं विवक्षणीयम्, वह्न्यभावव-ज्जातिमत्त्वावच्छिन्नविषयितात्वं वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयितासमानाधिकरणाभावप्रतियोगिता-वच्छेदकमिति तदवच्छिन्नविषयिताशून्यमेव ज्ञानं ग्राह्यमिति वाच्यम्, ज्ञानविशेषवृत्तित्वविशिष्टवह्न्य-भाववद्ध्रदत्वावच्छिन्नविषयित्वाभावस्यापि वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयितासमानाधिकरणत्वस-म्भवात् । एवं तज्ज्ञानवृत्तित्वविशिष्टवह्न्यभाववज्जातिमत्त्वावच्छिन्नविषयिताशून्यत्वस्य जातिमान् वह्न्यभाववानितिज्ञानेऽपि सत्त्वेन तस्य चाप्रतिबन्धकत्वेनाप्यसम्भवात् । यदि तु यद्रूपावच्छिन्नविषयि-तावद्वृत्तित्वं किञ्चिद्रूपावच्छिन्नविषयिता नास्तीतिप्रतीतिसिद्धः किञ्चिद्रूपनिष्ठावच्छेदकताभिन्नावच्छिन्न-तात्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपकतादृशावच्छेदकतानिरूपकावच्छिन्नत्वनिष्ठावच्छेदकताभि-न्नविषयितात्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपकप्रतियोगिताकोऽभावस्तदीयप्रतियोगिविषयिता ना-स्तीति प्रतीतिसिद्धाभावं तद्व्यक्तिविशेषमादाय तन्निष्ठावच्छेदकताभिन्ना सती यद्रूपावच्छिन्नविषयि-तानिष्ठावच्छेदकताभिन्ना तादृशनिश्चयत्वनिष्ठावच्छेदकताभिन्ना याऽवच्छेदकता तदनिरूपकेत्यादिरीत्या नि-श्चयनिष्ठावच्छेदकतानिरूपकवृत्तित्वनिष्ठावच्छेदकतानिरूपकभेदनिष्ठावच्छेदकतानिरूपकप्रतियोगित्वनि-ष्ठावच्छेदकतानिरूपकावच्छेदकतात्वावच्छिन्नप्रतियोगिताकाभावः प्रतिबन्धकतायां निवेश्यते, तदापि स्मृत्यन्यत्वखण्डनोक्तरीत्या तत्तदवच्छेदकतानिरूपकेऽपि तत्तदवच्छेदकतानिरूपकत्वाभावः सम्पाद्य ह्रद-सम्भव, ह्रदो जात्यभाववानित्यादौ जातिमद्ध्रदेऽव्याप्तिश्च, जातिमान् जातिमानित्यप्रतिबन्धकीभूतज्ञा-नानाराणाम्, जातिमज्जातिमत्त्वस्य जातिमत्त्वानतिरिक्ततया तदवच्छिन्नविषयत्वस्यापि व्यापकत्वानुप-पत्तेः । यदि तु यद्रूपावच्छिन्नविषयितात्वमित्यादेर्यद्रूपावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकविषयि-तात्वं यादृशसमुदायवृत्तिसमुदायत्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकताकविषयित्वस-मानाधिकरणाभावप्रतियोगितावच्छेदकमित्यादिकोऽर्थं उच्यते, तदापि समुदायत्वस्य धर्मविशेषविषयत्व-रूपतया तज्ज्ञानवृत्तित्वविशिष्टवह्न्यभाववद्ध्रदत्वगतसमुदायत्वावच्छिन्नत्वादिघटितविषयत्वाभावस्य

भावप्रयुक्त उभयाभाव इति न तत्राव्याप्तिः, अनुमितिस्तु 'पक्षः साध्यव्याप्यहेतुमान् साध्यवा'नित्या-कारेति सर्वदोषसङ्ग्रह इति कथं निर्वह्निः पर्वतो वह्निमानित्यादिस्थलीयदोषेऽव्याप्तिः, अनुमितेरना-हार्यत्वनियमात्, अनुमितिपरामर्शोभयविवक्षणेऽप्यनुमित्यप्रसिद्धिरेव, अनाहार्यपरामर्शस्यैवानुमिति-जनकत्वात्, न च तेषामप्रसिद्धता, निर्वह्नित्वेन पर्वते वह्निसाधने धूमो दुष्ट इति व्यवहारानुपपत्तिप्रसङ्गा-दित्यादेरस्य यद्रूपावच्छिन्ननिश्चयाव्यवहितोत्तरानुमितित्वव्यापकं विरोधिविषयताप्रयुक्ताभावाभाववत्त्वं तत्त्वमिति कल्पेऽनुसरणे, उभय तु पक्षतावच्छेदकविशिष्टपक्षे साध्यतावच्छेदकविशिष्टसाध्यवत्तावगाहित्वं तादृशसाध्यनिरूपितव्याप्तिविशिष्टहेतुतावच्छेदकविशिष्टहेतुमत्तावगाहित्वञ्च, अथोदासीनानुमितिमादाय लक्षणसमन्वयेन तोयस्थलीयबाधासिद्ध्यादिदोषेऽव्याप्तिः । यदि च इच्छितविषयकनिश्चयाव्यवहि-तोत्तरमनुमितिरप्रसिद्धा, तदा तदव्यवहितोत्तरदोषाजन्यज्ञानत्वव्यापकत्वमेव विवक्षणीयम्, एवञ्च नाहं गौर इति निश्चयानन्तरं दोषविशेषमहिम्नाऽहं गौर इति ज्ञानस्योत्पत्तावपि 'अहं गौर आत्मवा'-नित्यादिस्थलीयबाधादेर्नासङ्ग्रह इति । किन्त्वत्रापि सर्वत्र सर्वदा भूतो भ्रमस्याप्रामाणिकत्वात्तत्र साध्यस्य साध्यव्याप्यस्य वा भ्रमो न क्वचित्प्रसिद्धस्तत्स्थलीयदोषासङ्ग्रह, तादृशस्थलस्य सन्दि-ग्धत्वेऽपि लक्षणासिद्धिरेव, दोषसंशयात्, एवं निर्वह्निः पर्वतो वह्निमानित्याद्याश्रयासिद्धावी लक्ष-णासमन्वयेऽपि तत्रत्यबाधादौ निर्वह्निर्वह्निमानित्यादिस्थलीयनिर्वह्निनिष्ठवह्न्यभावादिरूपबाधादौ चा-व्याप्तिरेव, 'आहार्यस्याप्रतिबध्यत्वेन तद्ग्रहस्याप्रतिबन्धकतया तद्विषयविषयताया 'विरोधिविषयत्वयोगा-दानासम्भवादित्याकलय्य यावत्पक्षकयावत्साध्यकयावद्धेतौ यावन्तो दोषाः सम्भवन्ति तावदन्या-न्यत्वमित्येव वक्तुं निर्भरं भारतः, एकमात्रदोषस्थले च तत्त्वमेव हेत्वाभासत्वमित्युक्तम्, एवञ्चैतन्निरासो विशेषनिरासायत्त एवेति ।

## सामान्यनिरुक्तिखण्डनम् ।

इदम्पुनरिहावधेयम्—सर्वमाकाशवदित्यादावाकाशाभावविशिष्टसर्वादिरूपबाधाद्यन्यतमव्याप्तसि-द्धेस्तद्विशिष्टनिरूपितविषयितान्यतमविषयतानिरूपकतावच्छेदकधर्मवत्त्वं विवक्षणीयम्, तथा च तादृशधर्माणां नानात्वात्किञ्चित्तादृशधर्मवत्त्वं वा निखिलतादृशधर्मवत्त्वं वा विकल्प्याव्याप्तिरसम्भवो वा प्रसञ्जनीयः । न च तादृशनिरूपकतावच्छेदकत्वेन तादृशधर्माणामनुगमः, तस्यापि स्वरूपसम्बन्ध-विशेषात्मकतयाऽननुगतत्वात्, अतिरिक्तवृत्तित्वात्मकत्वेऽपि वृत्तित्वस्य स्वरूपसम्बन्धविशेषरूपत्वा-त्तदवच्छिन्नाभावानामानन्त्यात् प्रत्येकमिलितविकल्पावकाशात्, धर्ममात्रस्याननुगमासम्भवयोरुपपादि-तत्वाच्च, असर्वज्ञदुर्ज्ञेयत्वापादकत्वं स्वान्यतमाद्यघटनायाम् अनुयोगिप्रतियोगिविधया सकलप्रपञ्चप्रवेश-प्रसक्त्या भूयो निवेदितमेव । यथा च तस्याखण्डत्वेऽपि व्यासज्यवृत्तित्वाव्यासज्यवृत्तित्वाभ्यां दोषस्तथोक्तं परामर्शखण्डनशारदायाम् । एवं निर्वह्नित्वविशिष्टे वह्निसाधने धूमो दुष्ट इति व्यवहारस्यो-क्तान्यतमत्वाप्रतिसन्धानदशायामपि सत्त्वात्तेनैव लक्षणासम्भवः, तत्र दुष्टपदस्यैतल्लक्षणवादिमते वह्न्यभावविशिष्टनिर्वह्नित्वावच्छिन्नान्यतमपदार्थकतया निर्वह्नित्वविशिष्टे वह्निसाधने इत्यस्यान्वयप्र-सङ्गश्च । न च निर्वह्नित्वविशिष्टविशेष्यकवह्न्यनुमितिप्रयोजकत्वं तदर्थस्तस्य च धूमेऽन्वयसम्भव इति वाच्यम्, अनुमितेरनाहार्यतया तादृशानुमित्यप्रसिद्धेः । ननु किमेतावता, उक्तरूपस्य व्युत्पत्त्यौपयिकत्वमेव, व्यवहारौपयिकत्वं त्वन्यस्यैव स्यादिति चेत्, तस्यापि दुर्वचत्वात् । यत्तु—अभावप्रयोजकत्वमन्यवृत्तिविषयितानिरूपकत्वस्य दोषपदप्रवृत्तिनिमित्तत्वं साध्यनिष्ठायाः

प्रकारतायास्तन्निरूपितव्याप्तिप्रकारतानिरूपितधूमत्वाद्यवच्छिन्नप्रकारतायाश्च साधनपदार्थतामुपगम्य निर्वह्निस्वविशिष्टविशेष्यतानिरूपितवह्निप्रकारतानिरूपकत्वस्य तादृशविशेष्यतानिरूपिता या वह्निप्रकारतानिरूपितव्याप्तिप्रकारतानिरूपितधूमत्वावच्छिन्नप्रकारता तन्निरूपकत्वस्य च द्वयोरभावप्रयोजकप्रमाण्यवृत्तिविषयितानिरूपकत्वच्छाया धूमेऽवगाहनेन तादृशव्यवहारोपपादनम्, तदुक्तिनुक्तम्, व्यवहारो ह्युपपाद्य इति तस्य को विषय इत्यत्र व्यवहर्तार एव साक्षिणः न च परिष्कर्ता एव व्यवहर्ता, न वा परिष्कारानुसन्धानसमसमय एव व्यवहारः, तादृशपरिष्कारापरिष्काराभ्यां तादृशव्यवहारस्योपपत्तेः, धूमसाधने वह्निर्दुष्टत्वाद्विरुद्ध साधनशब्देनोक्तस्थलेऽप्यनुमितिरेव प्रतीयते इति सार्वजनीनम्, तस्मादनुभवविरुद्धविषयकत्वस्य तादृशव्यवहारे कल्पनापेक्षया वरं सम्यगनुपपन्नतास्वीकार इति, यदाहुरात्मतत्त्वविवेके उदयनाचार्याः—अप्रामाणिके ह्यर्थे मूकत्वानकुलयोर्मूक एव श्रेयानिति। किञ्चात्र यदभिमतमभिप्रायोऽस्साधनादिपदार्थोपवर्णनम्, स एव स्वसम्मतेनास्माभिरवलम्बनीयः, तथाहि—तत्र विरोधिविषयताप्रयुक्तत्वं यद्रूपावच्छिन्ननिश्चयाव्यवहितोत्तरानुमितिसामान्यस्य पक्षे साध्यावगाहित्वसाध्यव्याप्यहेत्ववगाहित्वद्वयाभाववत्त्वे निवेशितम्, तस्य तत्रानिवेशे निर्वह्निः पर्वतो वह्निमानित्याद्युदासीन घटादावतिव्याप्तिः स्यात्, निश्चयाव्यवहितोत्तरमपि तादृशावगाहितात्वयशालिनोऽनाहार्यस्यानुपपत्तेः, परन्तु व्यधिकरणतया स्वनिष्ठप्रतिबन्धकतावच्छेदकधर्मस्य स्वानन्तरोत्पन्नज्ञाननिष्ठप्रतिबध्यतावच्छेदकधर्माभावप्रयोजकत्वे मानाभावेन विरोधिविषयताप्रयुक्तत्वं क्वापि तादृशावगाहितोभयाभावे नास्ति। न चात्र व्यधिकरणयोरपि प्रयोज्यप्रयोजकभावः कल्पनीयः, अन्यथा प्रतिबन्धकतावच्छेदकाक्रान्तज्ञानसत्त्वेऽपि प्रतिबध्यतावच्छेदकाक्रान्तं ज्ञानं कदाचिदुत्पद्येतेति वाच्यम्, यत आहार्यं वा ज्ञानमापाद्येत, अनाहार्यं वा आद्यं नेष्टादिघटितसामग्र्यसत्त्वदशायां शक्यमापादयितुम्, तत्सत्त्वदशायां त्विष्टापत्तिरेव, द्वितीयेऽपि चेष्टमेव, इच्छाविरहेऽपि शास्त्रादेर्बाधसहकृताया सामग्र्या भविकत्वात्, अतएवासत्यपीति न्यायात्। अनुमितिरनाहार्या तदानीं कथमप्युत्पद्यत इति चेत्, प्रत्युक्तमेतत्, अनुमितित्वविवक्षाया दोषविषयकनिश्चयाव्यवहितोत्तरानुमित्यप्रसिद्धिस्थलेऽव्याप्तिसम्पादकत्वात्। अभ्युपेत्य चेदम्, प्रत्यक्षादौ बाधसहकृतायामनुमितेरपि सम्भवात्, आम्नतीय तत्राप्यनुमितौ भीरपनुव्यवसायस्यैवानुमितित्वे प्रमाणत्वात्, उपदर्शितदिशैतत्सम्यक्प्रकाशते। अतएवाऽस्यैवमुक्तम्, "प्रत्यक्षादौ बाधेन न ज्ञानं प्रतिबध्यते किन्तूत्पन्नज्ञानेऽप्रामाण्यं ज्ञाप्यते" इति मन्तुमपश्या प्रत्यक्षादौ दुष्टत्वादनुमितावप्युत्पन्नायामप्रामाण्यमेव ज्ञाप्यते न तूत्पत्तिरपि प्रतिबध्यते इत्येव वक्तव्यम् अनुमितेरुत्पत्तिरेव प्रतिबध्यते न तु प्रत्यक्षादेरिति तु तात्पर्यकप्रमाणकमेव। एवञ्च सति प्रतिबध्यप्रतिबन्धकभावघटितकल्पनान्तरस्यैवाप्रसरात् एव पर्यवसन्नः।

पक्षादौ साध्यादिवैशिष्ट्यावगाहित्वाद्यभावाधिकरणतायां पूर्वज्ञानीयविरोधिविषयितायाः अपि विनिगमकाभावेन प्रयोजकत्वेनोक्ताश्रयासिद्धिसङ्ग्रहः सम्भवत्येवेति चेन्न, तादृशाधिकरणतायाः पूर्वं दोषावगाहिज्ञानस्य सद्भावमात्रेण तदीयविषयितायास्तत्र प्रयोजकताकल्पने मानाभावात्, अन्यथाऽन्यथासिद्धस्यापि तत्र तत्र कारणताभ्युपगमापत्तेः, तज्जातीयव्यक्त्यन्तरेऽकॢप्तसत्त्वेन प्रत्यवस्थानं तु समानमेव, अनाहार्यज्ञाने निर्वह्नित्वविशिष्टे वह्निवैशिष्ट्यावगाहित्वाभावजातीयमिव तदधिकरणताजातीयमपि प्रति विरोधिविषयिताया: प्रयोजकत्वस्य काप्यक्लृप्तत्वात् । अधिकरणभेदेनाधिकरणताभेदाभ्युपगमेऽपि च भवतो रुचिरेव नियन्त्री धर्मिभेदस्य धर्मभेदप्रयोजकत्वेऽनुगतधर्ममात्रोच्छेदस्य भवतामनिष्टस्यैव प्रसङ्गः, अधिकरणतावच्छेदकभेदस्य निरूपकादिभेदस्य वाऽधिकरणताभेदप्रयोजकत्वे तु प्रकृतेऽधिकरणताभेदोपपादनासम्भवेन नोक्तसङ्ग्रहप्रकारः शक्यशङ्कोऽपीत्यपि द्रष्टव्यम् ।

ननु मा भूद्विर्वह्नित्वविशिष्टे वह्निसाधने धूमो दुष्ट इति व्यवहारस्योपपत्तिः, निर्वह्निः पर्वतो वह्निमानित्यादिप्रयोगस्यापार्थकत्वेनैव निग्रहसम्भवात्, शाब्दमतेराहार्यत्वोपगमेऽपि तत्र बाधितार्थाभिधायकत्वेनैव निग्रहोपपत्तेः, एवञ्च यद्रूपविशिष्टविषयकनिश्चयत्वव्यापकोऽसाधारण्यविषयकत्वानुमितिप्रतिबन्धकत्वोभयाभावस्तद्रूपवत्त्वमेव दोषत्वमित्यस्तु; मैवम्, उक्तव्यवहारो नैवास्तीति न तावद्वोपदेश शक्यं वक्तुम्, तस्मात्तस्य प्रामाणिकत्वं वा प्रामाणिकत्वेन सांशयिकत्वं चोभयथापि तदनुपपादनं दोष एव । किञ्च यद्रूपविशिष्टविषयकनिश्चयत्वव्यापकत्वमनुमितिप्रतिबन्धकतायां तद्रूपविशिष्टमादाय दुष्टत्वव्यवहारस्य स्वारसिकत्वेऽपि हेतुनिष्ठसाध्यव्यापकीभूताभावप्रतियोगित्वरूपासाधारण्यसङ्ग्रहमात्रसिद्धये उक्तोभयाभावघटितानिरुक्तयादृशस्य दुष्टत्वव्यवहारे पारिभाषिकत्वप्रसञ्जकत्वात्, हेत्वाभासविभागो हि भवतां भवतु पारिभाषिको न तु दुष्टत्वव्यवहारोऽपि, अन्यथैतदानीन्तननिर्वचनापरिचितानां पूर्वतनानामिदानीन्तनानां च तादृशां दुष्टत्वव्यवहारानापत्तेः । किञ्च साध्याभाववद्वृत्तिसाधनादिकं न व्यभिचारः, अपि तु व्यभिचारि, व्यभिचारस्तु साधने वर्तमानं साध्याभाववद्वृत्तित्वादिकमेव, एवञ्च व्यभिचारिणो दोषलक्षणाक्रान्तस्यात्साध्याभाववद्वृत्तिसाधनादावतिव्याप्तिः। लक्षणानुरोधेन लक्ष्यान्यथानयने तु मौढ्यमेव, प्रामाणिकव्यवहारस्यैव लक्षणैरनुगम्यत्वात् । एवं च सति यदि साध्याभाववद्वृत्तित्वमेव व्यभिचारो न तु व्यभिचारिविशेषितं तत्, तदा तत्राव्याप्तिरपि, तद्विषयकनिश्चयसामान्यस्य साध्यव्याप्यहेतुमत्तामहाविरोधित्वात् । किञ्च बाधादिस्थले कथं हेतोर्दुष्टत्वव्यवहारोपपत्तिः; स्वज्ञानविषयप्रकृतहेतुतावच्छेदकयावत्सम्बन्धेनेति तु मौढ्यमेव, तथाभूतानामसम्बन्धतायाः कार्यादौ च प्रकृतहेत्वादेर्द्दिवत्त्वात्, साध्याभाववद्वृत्तित्वादिकं यथा साधने प्रतीत्य तत्र दुष्टत्वव्यवहारस्ततो मात्रयाऽपि बाधादिस्थले न्यूनाधिकभावे तयोरेकतरस्मिन् दुष्टत्वव्यवहारस्यानुपपन्नतायाः अवश्योपेयत्वाच्च, एवञ्च सति साध्याभाववत्पक्षादिमात्रस्य बाधादिरूपत्वोपगमो मौढ्यमेव सूचयति । न चैतद्दोषपरिजिहीर्षया साध्याभाववत्पक्षकत्वादिबाधादिरूपत्वोपेयतामिति कल्प्यते, तस्य साध्याभाववत्पक्षादिरूपविशिष्टान्तरघटितत्वेन लक्ष्यतायाऽस्यनत्वात् । किञ्च स्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धस्य दुष्टत्वव्यवहारनियामकत्वोपगमेऽपि वह्निमान् द्रव्यादित्यत्र वह्निसाधने द्रव्यं दुष्टमितिवद् वह्निसाधने धूमो दुष्ट इत्यस्यापि व्यवहारस्यापत्तिः, द्रव्यत्वस्य प्रकृतहेतुतावच्छेदकस्य धूमे सद्भावात् । न च स्वज्ञानविषयप्रकृतहेतुतावच्छेदकत्वसम्बन्धेन दोषवत्त्वं प्रकृतहेतुतावच्छेदकावच्छेदेनैव स्वीक्रियतामिति धारणीय; निमित्तार्थिताप्रयोजकसिद्धान्तस्य कल्पनीयत्वात्, उक्तसम्बन्धस्य चानिप्रत्यक्षत्वात् । प्रकृतान्वयितावच्छेदकाभिन्नस्वज्ञानविषयप्रकृतहेतुतावच्छेदकत्वं सम्बन्ध इत्यपि न शोभनम्, स्वज्ञानविषयप्रकृत-

प्रकारतायास्तन्निरूपितव्याप्तिप्रकारतानिरूपितधूमत्वावच्छिन्नप्रकारतायाश्च साधनपदार्थतामुपगम्य निर्वह्नित्वविशिष्टविशेष्यतानिरूपितवह्निप्रकारतानिरूपकत्वस्य तादृशविशेष्यतानिरूपिता या वह्निप्रकारतानिरूपितव्याप्तिप्रकारतानिरूपितधूमत्वावच्छिन्नप्रकारता तन्निरूपकत्वस्य च द्वयोरभावप्रयोजकप्रमान्यवृत्तिविषयितानिरूपकत्वत्तया धूमेऽवगाहनेन तादृशव्यवहारोपपादनम्, तदतितुच्छम्, व्यवहारो ह्युपपाद्य इति तस्य को विषय इत्यत्र व्यवहर्तार एव साक्षिणः; न च परिष्कर्ता एव व्यवहर्ता, न वा परिष्कारानुसन्धानसमसमय एव व्यवहारः, तादृशपरिष्काराविष्कारात्पूर्वं तादृशव्यवहारलोपापत्तेः, धूमसाधने वह्निदुष्टहेत्वादिवच्च साधनशब्देनोक्तस्थलेऽप्यनुमितिरेव प्रतीयते इति सार्वजनीनम्, तस्मादनुभवविरुद्धविषयकत्वस्य तादृशव्यवहारे कल्पनापेक्षया वरं तस्यानुपपन्नतास्वीकार इति, यदाहुरात्मतत्त्वविवेके उदयनाचार्याः—अप्रामाणिके ह्यर्थे मूकवावदूकयोर्मूक एव श्रेयानिति। किञ्चानवद्दितकल्पमाश्रित्योक्तसाधनादिपदार्थोपवर्णनम्, स एव स्वसम्भवेनावश्यमास्कन्दनीयः, तथाहि—तत्र विरोधिविषयताप्रयुक्तत्वं यद्रूपावच्छिन्ननिश्चयाव्यवहितोत्तरानुमितिसामान्यस्य पक्षे साध्यावगाहित्वसाध्यव्याप्यहेत्ववगाहित्वरूपाभाववत्त्वे निवेशितम्, तस्य तत्रानिवेशे निर्वह्निः पर्वतो वह्निमानित्याद्युदासीन पदार्थप्रसिद्ध्यापत्तिः स्यात्, तन्निश्चयाव्यवहितोत्तरमपि तादृशावगाहिताद्वयशालिनोऽनाहार्यस्यानुत्पत्तेः, परन्तु व्यधिकरणतया स्वनिष्ठप्रतिबन्धकतावच्छेदकधर्मस्य स्वानन्तरोत्पन्नज्ञाननिष्ठप्रतिबध्यतावच्छेदकधर्माभावप्रयोजकत्वे मानाभावेन विरोधिविषयताप्रयुक्तत्वं क्वापि तादृशावगाहितोभयाभावे नास्ति। न चात्र व्यधिकरणयोरपि प्रयोज्यप्रयोजकभावः कल्पनीयः, अन्यथा प्रतिबन्धकतावच्छेदकाक्रान्तज्ञानसत्त्वेऽपि प्रतिबध्यतावच्छेदकाक्रान्तं ज्ञानं कदाचिदुत्पद्येतेति वाच्यम्, यत आहार्यं वा ज्ञानमापाद्येत, अनाहार्यं वा आद्यं नेच्छादिघटितसामग्र्यसत्त्वदशायां शक्यमापादयितुम्, तत्सत्त्वदशायां त्विष्टापत्तिरेव, द्वितीयेऽपि चैवमेव, इच्छाविरहेऽपि बाधादेर्बाधग्रहदशायामानुभविकत्वात्, अत्यन्तासत्यपीति न्यायात्। अनुमितिस्तावत्त तदानीं कथमप्युत्पद्यत इति चेत्, प्रत्युक्तमेतत्, अनुमितित्वविवक्षाया दोषविषयकनिश्चयाव्यवहितोत्तरानुमित्यप्रसिद्धिस्थलेऽव्याप्तिसम्पादकत्वात्। अभ्युपेत्य चेदम्, वस्तुतो बाधग्रहदशायामनुमितेरपि सम्भवात्, आप्रतीव तत्राप्यनुमिनोमीत्यनुव्यवसायस्यैवानुमितित्वे प्रमाणत्वात्, उपवर्णितश्चैतासम्यक्त्वखण्डने। अतएवाचार्यैरुक्तम्, "प्रत्यक्षादौ बाधेन न ज्ञानं प्रतिबध्यते किन्तूत्पन्नज्ञानेऽप्रामाण्यं ज्ञाप्यते" इति तदुक्त्या प्रत्यक्षादौ कुसृत्याऽनुमितावप्युत्पन्नायामप्रामाण्यमेव ज्ञाप्यते न तूत्पत्तिरपि प्रतिबध्यते इत्येव वक्तव्यम् अनुमितेरुत्पत्तिरेव प्रतिबध्यते न तु प्रत्यक्षादेरिति तु शपथैकप्रमाणकमेव। एवञ्च सति प्रतिबध्यप्रतिबन्धकभावघटितलक्षणान्तरेष्वप्यसम्भव एव पर्यवसन्नः।

किञ्च निर्वह्निः पर्वतो वह्निमानित्यादिस्थलीयदोषसङ्ग्रहाय यावदन्तिमकल्पानुसरणम्, न च तदनुसरणेऽपि तत्रान्यस्य कस्यापि दोषस्य सङ्ग्रहसम्भवः। न च तत्र पर्वतत्वसामानाधिकरण्येन वह्न्यभाववद्भिमतस्य पक्षतावच्छेदकघटकत्वे दोषासङ्ग्रहेऽपि पर्वतत्वावच्छेदेन तस्य पक्षतावच्छेदकघटकत्वे वह्निमत्पर्वतत्वस्याश्रयासिद्धिसङ्ग्रहसम्भव इति वाच्यम्, वह्निमान् पर्वत इति विरोधिज्ञानासत्त्वेऽपि निर्वह्निमान् पर्वतो वह्निमानित्यनाहार्यं ज्ञानं नोत्पद्यते इति विरोधिविषयित्वस्य न निर्वह्नित्वविशिष्टे वह्निवैशिष्ट्यावगाहित्वाभावप्रयोजकत्वमपि त्विच्छादिघटितनाहार्यज्ञानसामग्रीविरहस्यैवेति नोक्ताश्रयासिद्धिसङ्ग्रहोऽपि। ननु—यद्यप्यधिकरणभेदेनाभावो न भिद्यते, तथा सत्यभावानामधिकरणमनन्तत्वया लाघवानवकाशेनातिरिक्ताभावसिद्धिरेव न स्यात्, तथाप्यधिकरणभेदेनाधिकरणता भिद्यत एव, तथैव ■ विरोधिविषयिताप्रयुक्तत्वं निवेश्यम्, तथा सति विरोधिज्ञानानन्तरोत्पन्नज्ञाने

पक्षादौ साध्यादिवैशिष्ट्यावगाहित्वाद्यभावाधिकरणतायां पूर्वज्ञानीयविरोधिविषयितायाः अपि विनिगमका-
भावेन प्रयोजकत्वेनोक्ताश्रयासिद्धिसङ्ग्रहः सम्भवत्येवेति चेन्न, तादृशाधिकरणतायाः पूर्वं दोषावगाहि-
ज्ञानस्य सद्भावमात्रेण तदीयविषयितायास्तत्र प्रयोजकताकल्पने मानाभावात्, अन्यथाऽन्यथासिद्ध-
स्यापि तत्र तत्र कारणताभ्युपगमापत्तेः, तज्जातीयव्यक्त्यन्तरेऽक्लृप्तत्वेन अव्यवस्थानं तु समानमेव,
अनाहार्यज्ञाने निर्वह्नित्वविशिष्टे वह्निवैशिष्ट्यावगाहित्वाभावजातीयमिव तदधिकरणताजातीयमपि प्रति
विरोधिविषयितायाः प्रयोजकत्वस्य क्वाप्यक्लृप्तत्वात् । अधिकरणभेदेनाधिकरणताभेदाभ्युपगमेऽपि च
भवतो रुचिरेव नियन्त्री धर्मिभेदस्य धर्मभेदप्रयोजकत्वेऽनुगतधर्ममात्रावच्छेदस्य भवतामनिष्टस्यैव प्रसङ्गः,
अधिकरणतावच्छेदकभेदस्य निरूपकादिभेदस्य वाऽधिकरणताभेदप्रयोजकत्वे तु प्रकृतेऽधिकरणताभेदोप-
पादनासम्भवेन नोक्तसङ्ग्रहप्रकारः सम्यक्पक्षोऽपीत्यपि द्रष्टव्यम् ।

ननु मा भून्निर्वह्नित्वविशिष्टे वह्निसाधने धूमो दुष्ट इति व्यवहारस्योपपत्तिः, निर्वह्निः पर्वतो
वह्निमानित्यादिप्रयोक्तुः स्वपक्षार्थकतयैव निग्रहसम्भवात्, शाब्दमते आहार्यत्वोपगमेऽपि तत्र बाधितार्था-
भिधायकतयैव निग्रहोपपत्तेः, एवञ्च यद्रूपविशिष्टविषयकनिश्चयत्वव्यापकोऽसाधारण्याविषयकत्वा-
नुमितिप्रतिबन्धकत्वोभयाभावस्तद्रूपवत्त्वमेव दोषत्वमित्यस्तु, मैवम्, उक्तव्यवहारो नैवास्तीति न
तावद्वादिना शक्यं वक्तुम्, तस्मात्तस्य प्रामाणिकत्वं वा प्रामाणिकत्वेन सांशयिकत्वं वोभयथापि
तदनुपपादनं दोष एव । किञ्च यद्रूपविशिष्टविषयकनिश्चयत्वव्यापकत्वमनुमितिप्रतिबन्धकतायां
तद्रूपविशिष्टमादाय दुष्टत्वव्यवहारस्य स्वारसिकत्वेऽपि हेतुनिष्ठसाध्यव्यापकीभूताभावप्रतियोगित्वरू-
पासाधारण्यसङ्ग्रहमात्रसिद्धये उक्तोभयाभावघटितनिरुक्त्यादरस्य दुष्टत्वव्यवहारे पारिभाषिकत्वप्रसञ्ज-
कत्वात्, हेत्वाभासविभागो हि भवतां भवतु पारिभाषिको न तु दुष्टत्वव्यवहारोऽपि, अन्यथेदानीन्त-
ननिर्वचनापरिचितानां पूर्वतनानामिदानीन्तनानां च तादृशो दुष्टत्वव्यवहारानापत्तेः । किञ्च
साध्याभाववद्वृत्तिसाधनादिकं न व्यभिचारः, अपि तु व्यभिचारि, व्यभिचारस्तु साधने वर्तमानं
साध्याभाववद्वृत्तित्वादिकमेव, एवञ्च व्यभिचारिणो दोषलक्षणालक्ष्यत्वात्साध्याभाववद्वृत्तिसाधना-
द्यावतिव्याप्तिः। लक्षणानुरोधेन लक्ष्याप्रथायनये तु मौग्ध्यमेव, प्रामाणिकव्यवहारस्यैव लक्षणैरनुग-
म्यत्वात् । एवं च सति यदि साध्याभाववद्वृत्तित्वमेव व्यभिचारो न तु व्यभिचारिविशेषितं तत्,
तदा तत्राप्याप्तिरपि, तद्विषयकनिश्चयसामान्यस्य साध्यव्याप्यहेतुमत्ताग्रहाविरोधित्वात् । किञ्च
बाधादिस्थले कथं हेतोर्दुष्टत्वव्यवहारोपपत्तिः, स्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धेनेति
न मौग्ध्यम्, तथाभूतानामसम्बन्धतायाः [illegible] प्रकृताधेयित्वात्, साध्याभाव-
वद्वृत्तित्वादिकं यथा साधने प्रतीत्य तत्र दुष्टत्वव्यवहारस्तथा मात्रयाऽपि बाधादिस्थले न्यूनाधिकभावे
तयोरेकतरस्मिन् दुष्टत्वव्यवहारस्यानुपपन्नतायाः अवश्योपेयत्वाच्च, एवञ्च सति साध्याभाववत्पक्षादि-
मात्रस्य बाधादिरूपतोपगमो नौचितीं पुष्णाति । न चैतद्दोषपरिजिहीर्षया साध्याभाववत्पक्षकत्वादे-
र्बाधादिरूपतोपेयतामिति श्लिष्यते, तस्य साध्याभाववत्पक्षादिरूपविशिष्टान्तरघटितत्वेन लक्ष्यताप-
त्त्यसम्भवात् । किञ्च स्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धस्य दुष्टत्वव्यवहारनियामकत्वोपगमेऽपि
वह्निमान् द्रव्यादित्यत्र वह्निसाधने द्रव्यं दुष्टमितिवद् वह्निसाधने धूमो दुष्ट इत्यस्यापि
व्यवहारस्यापत्तिः, द्रव्यत्वस्य प्रकृतहेतुतावच्छेदकस्य धूमे सद्भावात् । न च स्वज्ञानविषयप्रकृतहेतु-
तावच्छेदकवत्त्वसम्बन्धेन दोषवत्तां प्रकृतहेतुतावच्छेदकावच्छेदेनैव स्वीकृत्यातिप्रसङ्गो वारणीय,
निमित्तस्यैवानन्यथासिद्धस्य कल्पनीयत्वात्, उक्तसम्बन्धस्य चातिप्रसक्तत्वात् । प्रकृतान्वयितावा-
च्छेदकाभिन्नस्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वं सम्बन्ध इत्यपि न शोभनम्, स्वज्ञानविषयप्रकृत-

प्रकारतायाश्च वह्निरूपितव्याप्तिप्रकारतानिरूपितधूमत्वावच्छिन्नप्रकारतायाश्च साधनपदार्थतामुपगम्य निर्वह्नित्वविशिष्टविशेष्यतानिरूपितवह्निप्रकारतानिरूपकत्वस्य तादृशविशेष्यतानिरूपिता या वह्निप्रकारतानिरूपितव्याप्तिप्रकारतानिरूपितधूमत्वावच्छिन्नप्रकारता तन्निरूपकत्वस्य च द्वयोरभावप्रयोजकप्रामाण्यवृत्तिविषयितानिरूपकत्वतया धूमेऽवगाहनेन तादृशव्यवहारोपपादनम्, तदतितुच्छम्, व्यवहारो ह्युपपाद्य इति तस्य को विषय इत्यत्र व्यवहर्तार एव साक्षिण,' न च परिष्कर्ता एव व्यवहर्ता, न वा परिष्कारानुसन्धानसमसमय एव व्यवहार, तादृशपरिष्कारानिष्काशात्पूर्वं तादृशव्यवहारलोपापत्ते, धूमसाधने वह्निर्दुष्टइत्यादिरीत्या साधनशब्देनोक्तस्थलेऽप्यनुमितिरेव प्रतीयते इति सार्वजनीनम्, तस्मादनुभवविरुद्धविषयकत्वस्य तादृशव्यवहारे कल्पनापेक्षया वरं तस्यानुपपन्नतास्वीकार इति, यदाहुरात्मतत्त्वविवेके उदयनाचार्या —अप्रामाणिके ह्यर्थे मूकवावदूकयोर्मूक एव श्रेयानिति। किञ्चात्रदर्शितकल्पनाधिक्योक्तसाधनादिपदार्थोपवर्णनम्, स एव स्वसम्भवेनावश्यमास्कन्दनीय', तथाहि—तत्र विरोधिविषयताप्रयुक्तत्वं यद्रूपावच्छिन्ननिश्चयाव्यवहितोत्तरानुमितिसामान्यस्य पक्षे साध्यावगाहित्वसाध्यव्याप्यहेत्ववगाहित्वद्वयाभावप्रयोजकत्वे निवेशितम्, तस्य तत्रानिवेशे निर्वह्नि' पर्वतो वह्निमानित्यादावुदासीन घटवान्नित्यपि स्यात्, तन्निश्चयाव्यवहितोत्तरमपि तादृशावगाहितात्वयशालिनोऽनाहार्यस्यानुत्पत्तेः, परन्तु व्यधिकरणतया स्वनिष्ठप्रतिबन्धकतावच्छेदकधर्मस्य स्वानन्तरोत्पन्नज्ञाननिष्ठप्रतिबध्यतावच्छेदकधर्माभावप्रयोजकत्वे नानाभावेन विरोधिविषयताप्रयुक्तत्वं क्वापि तादृशावगाहितोभयाभावे नास्ति। न चात्र व्यधिकरणयोरपि प्रयोज्यप्रयोजकभाव कल्पनीय', अन्यथा प्रतिबन्धकतावच्छेदकाक्रान्तज्ञानसत्त्वेऽपि प्रतिबध्यतावच्छेदकाक्रान्तं ज्ञानं कदाचिदुत्पद्येतेति वाच्यम्, यत आहार्यं वा ज्ञानमापाद्येत, अनाहार्यं वा आद्यं नेच्छादिघटितसामग्रीसत्त्वदशायां शक्यमापादयितुम्, तत्सत्त्वदशायामिष्टापत्तेः, द्वितीयेऽपि दोषनैव, इच्छाविरहेऽपि तादृशाहार्यग्रहदशायामानुभविकत्वात्, अत्यन्तासत्यपीति न्यायात्। अनुमितिस्तावत् तदानीं कथमप्युत्पद्यत इति चेत्, प्रत्युक्तमेतत्, अनुमितित्वविवक्षाया दोषविषयकनिश्चयाव्यवहितोत्तरानुमित्यप्रसिद्धिस्थलेऽव्याप्तिसम्पादकत्वात्। अभ्युपेत्य चेदम्, स्वप्नादौ बाधग्रहदशायामनुमितेरपि सम्भवात्, जाग्रति तत्राप्यनुमिनोमीत्यनुव्यवसायस्यैवानुमितित्वे प्रमाणत्वात्, उपवर्णितमेतत्सम्यक्खण्डने। अत एवोक्तम्, "प्रत्यक्षाद्यैर्बाधेत न ज्ञानं प्रतिबध्यते किन्तूत्पन्नस्यानेऽप्रामाण्यं ज्ञाप्यते" इति मण्युक्त्या प्रत्यक्षादौ कृतसत्त्वादनुमितावप्युत्पन्नायामप्रामाण्यमेव ज्ञाप्यते न तूत्पत्तिरपि प्रतिबध्यते इत्येव वक्तव्यम् अनुमितेरुत्पत्तिरेव प्रतिबध्यते न तु प्रत्यक्षादेरिति तु शपथैकप्रमाणकमेव। एवञ्च सति प्रतिबध्यप्रतिबन्धकभावघटितकल्पान्तरेष्वप्यसम्भव एव पर्यवसन्न।

किञ्च निर्वह्नि पर्वतो वह्निमानित्यादिस्थलीयदोषसङ्ग्रहायाप्रदर्शितकल्पानुसरणम्, न च तदनुसरणेऽपि तत्रत्यस्य कस्यापि दोषस्य सङ्ग्रहसम्भवः। न च तत्र पर्वतत्वसामानाधिकरण्येन वह्न्यभाववत्त्वनिश्चयस्य पक्षतावच्छेदकघटकत्वे दोषासङ्ग्रहेऽपि पर्वतत्वावच्छेदेन तस्य पक्षतावच्छेदकघटकत्वे वह्निमत्पर्वतत्वपक्षप्रसिद्धिसङ्ग्रहसम्भव इति वाच्यम्, वह्निमान् पर्वत इति विरोधिज्ञानसत्त्वेऽपि निर्वह्निमान् पर्वतो वह्निमानित्यनाहार्यं ज्ञानं नोत्पद्यते इति विरोधिविषयित्वस्य न निर्वह्नित्वविशिष्टे वह्निवैशिष्ट्यावगाहित्वाभावप्रयोजकत्वमपि इच्छादिघटिततादृशाहार्यज्ञानसामग्रीविरहस्यैवेति भागासिद्धिसङ्ग्रहोऽपि। ननु—यद्यव्यधिकरणभेदेनाभावो न भिद्यते, तथा सत्यभावानामधिकरणमसङ्ख्यतया साध्याभावत्वेनातिरिक्ताभावसिद्धिरेव न स्यात्, तथाप्यधिकरणभेदेनाधिकरणता भिद्यते एव, तथैव च विरोधिविषयिताप्रयुक्तत्वं निवेश्यम्, तथा सति विरोधिज्ञानानन्तरोत्पन्नज्ञाने

पक्षादौ साध्यादिवैशिष्ट्यावगाहित्वाद्यभावाधिकरणतायां पूर्वज्ञानीयविरोधिविषयितायाः अपि विनिगमकाभावेन प्रयोजकत्वेनोक्ताश्रयासिद्धिसङ्ग्रहः सम्भवत्येवेति चेन्न, तादृशाधिकरणतायाः पूर्वं दोषावगाहिज्ञानस्य सद्भावमात्रेण तदीयविषयितायास्तत्र प्रयोजकताकल्पने मानाभावात्, अन्यथाऽन्यथासिद्धस्यापि तत्र तत्र कारणताभ्युपगमापत्तेः, तज्जातीयव्यक्त्यन्तरेऽक्लृप्तत्वेन प्रत्यवस्थानं तु समानमेव, अनाहार्यज्ञाने निर्वह्नित्वविशिष्टे वह्निवैशिष्ट्यावगाहित्वाभावजातीयमिव तदधिकरणताजातीयमपि प्रति विरोधिविषयितायाः प्रयोजकत्वस्य क्वाप्यक्लृप्तत्वात् । अधिकरणभेदेनाधिकरणताभेदाभ्युपगमेऽपि च भवतो रुचिरेव नियन्त्री धर्मिभेदस्य धर्मभेदप्रयोजकत्वेऽनुगतधर्ममात्रावच्छेदस्य भवतामनिष्टस्यैव प्रसङ्गः, अधिकरणतावच्छेदकभेदस्य निरूपकादिभेदस्य वाऽधिकरणताभेदप्रयोजकत्वे तु प्रकृतेऽधिकरणताभेदोपपादनासम्भवेन नोक्तसङ्ग्रहप्रकारः सम्भवतीत्यपीत्यपि द्रष्टव्यम् ।

ननु मा भूनिर्वह्नित्वविशिष्टे वह्निसाधने धूमो दुष्ट इति व्यवहारस्योपपत्तिः, निर्वह्निः पर्वतो वह्निमानित्यादिप्रयोक्तुरव्यवाद्यर्थकतयैव निग्रहसम्भवात्, कात्स्न्यमतेराहार्यत्वोपगमेऽपि तत्र बाधितार्थाभिधायकतयैव निग्रहोपपत्तेः, एवञ्च यद्रूपविशिष्टविषयकनिश्चयत्वव्यापकोऽसाधारण्याविषयकत्वानुमित्यप्रतिबन्धकत्वोभयाभावस्तद्रूपवत्त्वमेव दोषत्वमित्यस्तु, मैवम्, उक्तव्यवहारो नैवास्तीति न तावद्दर्वाग्दृशा शक्यं वक्तुम्, तस्मादस्य प्रामाणिकत्वं वा प्रामाणिकत्वेन सांशयिकत्वं वोभयथापि तदनुपपादनं दोष एव । किञ्च यद्रूपविशिष्टविषयकनिश्चयत्वव्यापकत्वमनुमितिप्रतिबन्धकतायां तद्रूपविशिष्टमादाय दुष्टत्वव्यवहारस्य स्वारसिकत्वेऽपि हेतुनिष्ठसाध्यव्यापकीभूताभावप्रतियोगित्वरूपासाधारण्यसङ्ग्रहमात्रसिद्ध्ये उक्तोभयाभावघटितनिरुक्त्याद्रस्य दुष्टत्वव्यवहारे पारिभाषिकत्वप्रसञ्जकत्वात्, हेत्वाभासविभागो हि भवता भवतु पारिभाषिको न तु दुष्टत्वव्यवहारोऽपि, अन्यथेदानीन्तननिर्वचनपरिचितानां पूर्वतनानामिदानीन्तनानां च तादृशो दुष्टत्वव्यवहारानापत्तेः । किञ्च साध्याभाववद्वृत्तिसाधनादिकं न व्यभिचारः, अपि तु व्यभिचारि, व्यभिचारस्तु साधने वर्तमानं साध्याभाववद्वृत्तित्वादिकमेव, एवञ्च व्यभिचारिणो दोषलक्षणाक्रान्तत्वात्साध्याभाववद्वृत्तिसाधनादावतिव्याप्तिः । लक्षणानुरोधेन लक्ष्यान्यथानयने तु मौढ्यमेव, प्रामाणिकव्यवहारस्यैव लक्षणैरनुगम्यत्वात् । एवं च सति यदि साध्याभाववद्वृत्तित्वमेव व्यभिचारो न तु व्यभिचारिविशेषितं सद्, तदा तत्राव्याप्तिरपि, तद्विषयकनिश्चयसामान्यस्य साध्यव्याप्यहेतुमत्ताग्रहाविरोधित्वात् । किञ्च बाधादिस्थले कथं हेतोर्दुष्टत्वव्यवहारोपपत्तिः; स्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धेनेति तु नौचित्यावहम्, तथाभूतानामसम्बद्धतायाः [illegible], साध्याभाववद्वृत्तित्वादिकं यथा साधने वर्तते तत्र दुष्टत्वव्यवहारस्ततो मात्रयाऽपि बाधादिस्थले न्यूनाधिकभावे तयोरेकतरस्मिन् दुष्टत्वव्यवहारस्यानुपपन्नताया अवश्योपेयत्वाच्च, एवञ्च सति साध्याभाववत्पक्षादिमात्रस्य बाधादिरूपतोपगमो नौचित्यं चुम्बति । न चैतद्दोषपरिजिहीर्षया साध्याभाववत्पक्षत्वादेर्बाधादिरूपतोपेयतामिति श्लिष्यते, तस्य साध्याभाववत्पक्षादिरूपविशिष्टान्तरघटितत्वेन लक्ष्यतायाः स्यक्तत्वात् । किञ्च स्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धस्य दुष्टत्वव्यवहारनियामकत्वोपगमेऽपि वह्निमान् द्रव्यादित्यत्र वह्निसाधने द्रव्यं दुष्टमितिवद् वह्निसाधने धूमो दुष्ट इत्यस्यापि व्यवहारस्यापत्तिः, द्रव्यत्वस्य प्रकृतहेतुतावच्छेदकस्य धूमे सद्भावात् । न च स्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धेन दोषवत्तां प्रकृतहेतुतावच्छेदकावच्छेदेनैव स्वीकृत्यातिप्रसङ्गो वारणीयः; निमित्तस्यैवानत्यापत्तिद्वारस्य कल्पनीयत्वात्, उक्तसम्बन्धस्य चातिप्रसक्तत्वात् । प्रकृतान्वयितावच्छेदकाभिन्नस्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वं सम्बन्ध इत्यपि न शोभनम्, स्वज्ञानविषयप्रकृत-

हेतुतावच्छेदकत्वसम्बन्धेन प्रकृतहेतुतावच्छेदकस्येव तदन्यस्यापि दुष्टत्वव्यवहारान्वयितावच्छेदकत्वं किमिति न स्यादित्यत्रोक्तापादनस्य पर्यवसाने हेतुतावच्छेदकेऽन्वयितावच्छेदकाभेदनिवेशस्य तदपरिहारत्वात्, प्रकृतान्वयितावच्छेदकत्वस्य ज्ञानस्य चानुपस्थितावपि दुष्टत्वव्यवहाराच्च, न च संसर्गस्य पूर्वमुपस्थितिर्नापेक्षणीया, दुष्टत्वव्यवहारस्यापि तद्विषयत्वानियमात्। यत्र प्रमेयवती हेतुत्वं तत्र घटो दुष्ट इत्यादिव्यवहारस्याप्यापत्तेश्च, अन्वयितावच्छेदकहेतुतावच्छेदकाभेदात्। न चान्वयितावच्छेदकतात्वावच्छिन्नपर्याप्त्यनुयोगितावच्छेदकावच्छिन्नप्रकृतहेतुतावच्छेदकतात्वावच्छिन्नपर्याप्त्यनुयोगितावच्छेदकधर्मस्य सम्बन्धघटकता, पर्याप्तेर्निरस्तत्वात्। वह्निमान् काञ्चनमयधूमादित्यत्र काञ्चनमयत्वेन धूमो दुष्ट इत्यस्यानापत्तेश्च, कथञ्चित्प्रकारान्तरानुसरणे च तस्य व्यवहारविषयताया वाचितत्वमेवेति।

किञ्च वह्न्यभाववज्जलवद्वृत्तिजलवद्ह्रदेऽतिव्याप्तिवारणाय विशिष्टद्वयाघटितत्वं निवेश्यते, एवं सति प्रसिद्धेत्वव्यापकसाध्याभावसमानाधिकरणप्रतिहेतुमत्पक्षस्य सत्प्रतिपक्षरूपत्वमस्ति न वा? नेतीति न वाच्यम्, प्राचीनानां तथा व्यवहारदर्शनात्, व्यवहारश्च परिष्कर्तृभिरनुगमनीयो न त्वन्यथयितव्य इति तूक्तमेव, अथ व्यवहारोऽसौ न युक्त इति तदननुगमेऽपि न क्षतिः, तर्हि लक्षणसत्त्वासत्त्वाभ्यां व्यवहारसदसत्त्वयोर्निर्णयः, व्यवहारसदसत्त्वाभ्यां च लक्षणसदसत्त्वयोर्निर्णय इति परस्पराश्रयः। न च - लोकोत्तरधीमतां व्यवहारो न लक्षणज्ञानायत्तोऽपि तु स्वतन्त्रः, तद्व्यवहारानुगमकलक्षणमहायसन्तु मन्दमतीनां व्यवहार इति नान्योन्याश्रय इति - वाच्यम्, प्रतिवादिनं प्रति स्वातन्त्र्योपगमे, निमित्तस्यावश्यं वक्तव्यत्वात्, अन्यथा व्यवहारस्याश्रद्धेयतापत्तेः। न च प्रतिबन्धकतावच्छेदकविषयितानिरूपकतावच्छेदकधर्मवत्त्वं दोषव्यवहारनिमित्तम्, अवच्छेदकधर्मदर्शनविधया प्रतिबन्धके जलवद्ह्रदादावतिप्रसक्तेः, प्रतिबन्धकतानतिरिक्तवृत्तित्वं प्रतिबन्धकतावच्छेदकत्वमित्युक्तावपि वह्न्यभाववज्जलवद्वृत्तिजलवद्ह्रदेऽतिप्रसक्तेः, प्रतिबन्धकतानवच्छेदकविषयितानिरूपकाघटितधर्मवत्त्वमित्युक्तावसम्भव एव वह्न्यभाववान् ह्रद इत्यादिज्ञाने निरवच्छिन्नह्रदत्वप्रकारतानिरूपितविशेष्यतादीनां प्रकृतानुमितिप्रतिबन्धकतानवच्छेदकत्वात्तदाश्रयाणां दोषघटकानां प्रतिबन्धकतानवच्छेदकविषयितानिरूपकत्वात्। अथ प्रतिबन्धकतानवच्छेदकत्वमत्र प्रतिबन्धकतावच्छेदकविषयताविशिष्टान्यत्वम्, वैशिष्ट्यञ्च स्वतादात्म्यस्वावच्छेद्यत्वान्यतरसम्बन्धेन, उक्तनिरवच्छिन्नविषयतानाञ्च स्वसमानाधिकरणप्रतिबन्धकतावच्छेदकीभूतविषयतावच्छेद्यत्वात्। नन्वेवमपि वह्निरवृत्तिरित्यत्र बाधे वह्निमत्यव्याप्तिः, तज्ज्ञानस्य वह्नित्वावच्छिन्नप्रकारताशालिनिश्चयत्वेन प्रतिबन्धकतया वह्न्यात्मकनिष्ठविशेष्यताया प्रतिबन्धकतावच्छेदकविषयतात्मकत्वात् तदनवच्छिन्नत्वाच्च तादृशविषयताविशिष्टान्यत्वयोन्याभावस्य तद्घटकघटितत्वादिति वाच्यम्, स्वनिरूपितत्वस्यापि तृतीयसम्बन्धस्य वक्तव्यत्वात्। ननु तथापि वह्न्यभाववान् ह्रद इति ज्ञानस्यावच्छिन्नप्रतियोगिताकसम्बन्धावच्छिन्नवह्नित्वनिष्ठप्रकारतानिरूपिताभावत्वावच्छिन्नविशेष्यत्वावच्छिन्नप्रकारतानिरूपितह्रदत्वावच्छिन्नविषयताशालिनिश्चयत्वेन लाघवात् प्रतिबन्धकत्वे वह्निविषयताया उक्तान्यतमसम्बन्धेन तादृशविषयताविशिष्टत्वाभावात्तदाश्रयघटितत्वाच्च वह्न्यभाववद्ह्रदेऽव्याप्तिः, तथोक्तरूपेण प्रतिबन्धकत्वे वाच्येऽपि वह्नित्ववद्भाववद्ह्रदस्यैवेति वाच्यम्, वह्न्यभाववान् ह्रद इति ज्ञानस्यैतेनरूपेण प्रतिबन्धकतया वह्न्यभाववद्ह्रदस्यैव दोषत्वात्, भवतेनाभावे स्वरूपतो वह्नित्वस्य प्रकारतासम्भवात्, अन्यथा तत्क्त्वादिघटितवह्नित्वस्यानुपस्थितिदशायां बाधप्रत्यक्षस्याप्रतिबन्धकतापत्तेः, तद्धर्मेरपि तद्धर्मित्वेन भानोविषयाद्वह्नित्वरूपतयाऽप्रकारकज्ञानस्यापि स्वरूपतो वह्नित्वप्रकारकत्वाभावादिति चेत्, स्वावच्छेदनिरूपितत्वस्याप्यन्यतमकोटौ प्रवेशनीयत्वात्, उक्तबोधीयवह्निविषयताया प्रति-

बन्धकतावच्छेदकाभावत्वावच्छिन्नप्रकारतावच्छेद्याभावत्वावच्छिन्नविशेष्यतानिरूपितत्वेन तादृशविषयता-विशिष्टान्यत्वाभावेन नाव्याप्तिरिति चेन्न, धूमाभाववद्वृत्तिर्वह्निर्द्रव्यमितिज्ञानविषये द्रव्यत्वविशिष्टे धूमाभाववद्वृत्तिवह्न्यावव्याप्तेः, द्रव्यत्वनिष्ठप्रकारतायाः प्रतिबन्धकतावच्छेदकीभूतया धूमाभाववद्वृत्तित्वनिष्ठप्रकारतानिरूपितवह्नित्वावच्छिन्नविशेष्यतयाऽवच्छिन्ना या वह्नित्वावच्छिन्नविशेष्यता तन्निरूपितत्वात् । न च विशिष्टान्तराघटितत्वमपि विवक्षणीयमुक्तरूपं तु विशिष्टान्तरघटितमिति वाच्यम्, विशिष्टान्तरादिघटितस्यापि कुतो न दोषत्वमिति जिज्ञासायां भवता तद्व्यावृत्तं दोषत्वप्रयोजकं निर्वाच्यम्, एवञ्च तत्र विशिष्टान्तराद्यघटितत्वं न निवेशनीयम्; तद्व्यावृत्तप्रयोजकनिर्णयात्पूर्वं विशिष्टान्तरादिघटिते दोषत्वस्य सांशयिकत्वात्, एवञ्चान्योन्याश्रयोऽपि, तद्व्यावृत्तदोषत्वप्रयोजकनिर्णये तस्याद्दोषत्वनिर्णयः, तस्यादोषत्वनिर्णये तु तद्भेदघटितस्य तद्व्यावृत्तदोषत्वप्रयोजकस्य निर्णय इति । तदित्थं दोषत्वव्यवहारनिमित्तमपि यदा न निर्वक्तुं शक्यं तदा का कथा तद्वच्छेदेन प्रवर्तनीयानां लक्षणानां निर्वक्तुमशक्यतायाः ।

नन्वेवं प्रतिहेतुव्यापकसाध्याभावसमानाधिकरणप्रतिहेतुमत्पक्षव्यावृत्तदोषत्वप्रयोजकानवधारणेऽस्तु कथञ्चिद्भाविनव्यवहारबलात्तस्य सत्प्रतिपक्षरूपत्वमित्याद्यः पक्ष इति चेन्न, विशिष्टद्वयघटितत्वेन तत्राव्याप्तेर्दोषत्वापत्तेः । ननु सत्प्रतिपक्षघटकविशिष्टद्वयविषयताभिन्नविशिष्टद्वयविषयताशून्यप्रतीतिविषयत्वं विशिष्टद्वयाघटितत्वपदार्थः, नचैवमपि विशिष्टान्तराघटितत्वस्यापि लक्षणे निविष्टत्वेनोक्तसत्प्रतिपक्षस्य च विशिष्टान्तरघटिततयाऽव्याप्तिः, जलव्यापकवह्न्यभावसमानाधिकरणजलवान् ह्रदद्रव्यत्वेन जलव्यापकवह्न्यभावाधिकरणनिरूपितजलवान् ह्रद इत्यस्यापि ज्ञानस्य ज्ञानविशिष्टज्ञानत्वेन प्रतिबन्धकतया तादृशनिरूपितजलवद्ध्रदत्वविशिष्टस्य विशिष्टान्तरत्वात्, विशिष्टान्तरविषयतायामपि सत्प्रतिपक्षविषयताभेदोऽस्ति तु मेयत्वविशिष्टतादृशसत्प्रतिपक्षेऽतिव्याप्तेः, शुद्धसत्प्रतिपक्षस्य विशिष्टान्तरत्वेऽपि तदीयविषयतायां तदीयविषयताभिन्नत्वाभावादिति वाच्यम्, सत्प्रतिपक्षविषयिताव्यापकविषयिताशून्यज्ञानीयसत्प्रतिपक्षविषयिताभेदस्य विशिष्टान्तरविषयितायां वक्तव्यत्वात्, मेयत्वविशिष्टसत्प्रतिपक्षविषयकज्ञानीयसत्प्रतिपक्षविषयितायां सत्प्रतिपक्षविषयिताव्यापकविषयिताशून्यशुद्धसत्प्रतिपक्षज्ञानीयतद्विषयिताभेदस्य सत्त्वान्नातिव्याप्तिः, अत्र मनःप्रत्ययामात्रे [illegible] त्वानवच्छेदकविषयिताशून्यज्ञानीयत्वसम्बन्धेन साध्याभावानुमितिजनकताविशिष्टान्यत्वं विशिष्टान्तरविषयितायां वक्तव्यम्, उक्तनिरूपितजलवद्ध्रदविषयिता तु जनकताविशिष्टैवेति चेन्न, पर्वतो धूमवान् वह्नेरित्यादौ सत्प्रतिपक्षाप्रसिद्ध्या तत्र व्यभिचारादावव्याप्तेः । न च तादृशैकत्वाकिञ्चित्करत्वात्सत्प्रतिपक्षाप्रसिद्धिस्थले तद्विषयिताभिन्नत्वं नोपादेयमिति वाच्यम्, अर्थानुगमासम्भवेऽपि शब्दविशेषितव्यवहारस्यानुगतस्यैवोपलम्भात् शब्दैक्यस्याकिञ्चित्करत्वोक्तेरकिञ्चित्करत्वात्, कथमन्यथा धूमव्यभिचारिवह्निमान् धूमवान् वह्नेरित्यादौ व्यभिचारघटितबाधादौ विशिष्टान्तरघटिते महता प्रबन्धेनाव्याप्त्युपपादनतत्परिहारौ सङ्गच्छेयाताम्, तत्र विशिष्टान्तराघटितत्वानिवेशस्यैव सरलसरणित्वात्, तस्माच्छब्दतोऽनुगतस्यापि व्यवहारस्यानुरोधनं विधेयमेव । न चास्त्वेवं सति प्रतिहेतुविषयतानिरूपिताधिकरणविषयतानिरूपितवृत्तित्वविषयतानिरूपितत्वादिक्रमेण वैज्ञानिकसत्प्रतिपक्षविषयिताभेदनिवेश इति वाच्यम्, यादृशस्थलविषये सत्प्रतिपक्षभ्रमोऽपि नास्ति तत्रागतेः, अव्याप्तिसन्देहेऽपि लक्षणासिद्धिरेव । एतेन विशिष्टद्वयाघटितत्वमनिवेश्य ज्ञानवैशिष्ट्यावच्छिन्नत्वसत्प्रतिपक्षविषयत्वानवच्छिन्नत्वोभयाभाववत्त्वमेव प्रतिबन्धकतायां निवेशनीयम्, वस्तुतस्तु प्रकृतहेतुनिष्ठसाध्यव्यापकीभूताभावप्रतियोगित्वरूपासाधारण्यस्यापि सत्प्रदायासाधारण्यविषयितानवच्छिन्नत्व-

घटितत्रितयाभाव एव वक्तव्य इत्यपि नाशङ्कनीयम्, यत्रासाधारण्यभ्रमस्तत्राप्रसिद्धिस्तत्राव्याप्तेश्च। प्रतिहेतुव्यापकसाध्याभाववालीनप्रतिहेतुमत्पक्षेऽतिव्याप्तेश्च, तन्निश्चये प्रतिहेतुव्यापकसाध्याभाव-समानाधिकरणप्रतिहेतुमत्पक्षनिश्चये चैकस्या एव प्रतिबन्धकतायाः सत्त्वात्तस्याश्च सत्प्रतिपक्ष-विषयत्वावच्छिन्नत्वात्।

किञ्च विशिष्टद्वयाघटितत्वमिदं यद्रूपावच्छिन्नविषयत्वाव्यापकविषयताशून्ययद्रूपावच्छिन्नविषय-ताशालिनिश्चयविशिष्टयद्रूपावच्छिन्नविषयत्वाव्यापकविषयताशून्ययद्रूपावच्छिन्नविषयताशालिनिश्चयत्वं प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतानतिरिक्तवृत्ति तद्रूपावच्छिन्नविषयताविशिष्ट-तद्रूपावच्छिन्नविषयताशून्यप्रतीतिविषयत्वम्, जातिमद्वान् वह्न्यभाववानितिनिश्चयविशिष्टस्य जलवान् ह्रद इति निश्चयस्य जलवान् वह्न्यभाववानितिनिश्चयविशिष्टस्य जातिमाञ्जलवानितिनिश्चयस्य चाप्रति-बन्धकत्वेन तयोर्वारणायाव्यापकविषयताशून्यत्वोक्तिः, अधिकं त्वन्यत्रानुसन्धेयम्, किन्त्वत्र सर्वत्र यद्रूपपदेन वह्न्यभाववद्ध्रदत्वादिकस्योपादानसम्भवेन तद्रूपावच्छिन्नविषयताविशिष्टतद्रूपावच्छिन्नविषय-ताशून्यत्वस्य वह्न्यभाववद्ध्रदादिप्रतीतावभावेनासम्भववारणाय विशिष्टद्वयविषयतायां प्रकृतानुमिति-प्रतिबन्धकतातिरिक्तवृत्तित्वमपि प्रवेश्यम्, परस्परस्वावच्छिन्नविषयताशून्यज्ञानीयत्वं वा निवेशनीयम्, परस्परत्वस्य दुर्वचत्वेन तन्निवेशप्रणाली पुनरन्वेया, तथाहि—प्रकृतानुमितित्वव्यापकप्रतिबध्यतानि-रूपितप्रतिबन्धकताविशिष्टरूपवत्वं लक्षणम्, वैशिष्ट्यं तु स्वनिष्ठो यः किञ्चिद्रूपावच्छिन्नविषयिताव्यापक-विषयिताशून्यकिञ्चिद्रूपावच्छिन्नविषयिताशालिनिश्चयत्वव्यापकत्वरूपोऽभावस्तत्प्रतियोगितानिरूपितपरम्प-रीयावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावत्स्वाभाववत्प्रतीतिविषयितानिरूपकतावच्छेदकावत्त्वात् अ-भावीयप्रतियोगितावच्छेदकसम्बन्धस्तु स्वनिष्ठो यः किञ्चिद्रूपावच्छिन्नविषयिताव्यापकविषयि-ताशून्यकिञ्चिद्रूपावच्छिन्नविषयिताशून्यकिञ्चिद्रूपावच्छिन्नविषयिताशालिनिश्चयविशिष्टतादृशनिश्चयत्वव्या-पकत्वरूपोऽभावस्तदीयप्रतियोगितानिरूपितपरम्परीयनिश्चयनिष्ठावच्छेदकताविशिष्टविषयितारूप, अत्रो-भयत्र किञ्चिद्रूपावच्छिन्नविषयिताशून्यत्वेन परस्परावच्छिन्नविषयिताशून्यत्वमुक्तम् विषयितायामवच्छेदक-तावैशिष्ट्यन्तु स्वविशिष्टरूपावच्छिन्नत्वस्वविशिष्टरूपावच्छिन्नविषयितासामानाधिकरण्योभयसम्बन्धेन, स्वं हि द्वितीयनिश्चयनिष्ठावच्छेदकता। आद्यं वैशिष्ट्यं स्वनिरूपितविषयितानिष्ठावच्छेदकतानिरूपितावच्छि-न्नत्वसम्बन्धावच्छिन्नावच्छेदकतावत्त्व—स्वनिरूपितशून्यत्वनिष्ठावच्छेदकतानिरूपितविषयितानिष्ठावच्छे-दकतानिरूपिततद्विशिष्टभेदप्रतियोगितावच्छेदकत्वरूपाव्यापकत्वगर्भीभूताधिकरणनिष्ठपरम्परीयावच्छेदकता-निरूपितविषयितानिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावत्त्व—स्वनिरूपितसा-मानाधिकरण्यसम्बन्धावच्छिन्नप्रथमनिश्चयनिष्ठावच्छेदकतानिरूपितशून्यत्वनिष्ठावच्छेदकतानिरूपितविष-यितानिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावत्त्वेति संसर्गत्रयेण। द्वितीयं वैशिष्ट्यं तु स्वनिरूपितशून्यत्वनिष्ठावच्छेदकतानिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वस-म्बन्धावच्छिन्नावच्छेदकतावत्त्व—स्वनिरूपितसामानाधिकरण्यसम्बन्धावच्छिन्नावच्छेदकतावत्त्वेति सम्ब-न्धद्वयेन। अवच्छेदकतावत्ता च स्वनिरूपितविषयितानिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्ना-वच्छेदकतावत्त्व-स्वनिरूपितशून्यत्वनिष्ठावच्छेदकतानिरूपितविषयितानिष्ठावच्छेदकतानिरूपिततद्विशिष्ट-भेदप्रतियोगितावच्छेदकत्वरूपाव्यापकत्वघटकाधिकरणनिष्ठावच्छेदकतानिरूपितविषयितानिष्ठावच्छेदकता-निरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकत्वोभयसम्बन्धेनेति। यत्त्वेवं गगनाभाववद्भाववत्कालीन-घटो गगनवान्, इदं नीलरूपवद्दिग्यादित्यपेक्ष्याभाववत्तादात्म्यघटनीलरूपाभाववन्नीलादावतिव्याप्तिः; तत्र विशिष्टद्वयविषयिताया प्रतिबन्धकतानतिरिक्तवृत्तित्वाभावात्, परस्परस्वावच्छिन्नविषयिताशून्यज्ञा-

नीयत्वाभावाच्च । न च यद्रूपावच्छिन्नविषयितायामभाववत्ताद्दशघटत्वावच्छिन्नविषयिताभेदो निवेश्यः इति वक्तव्यम्, गगनाभाववदभाववत्कालीनघटोऽभावाभाववानित्यादावभाववत्ताद्दशघटादेर्दोषतया लक्ष्यत्वेन तत्राव्याप्त्यापत्तेः । न च शब्दैकमकिञ्चित्करमिति यत्र तस्य लक्ष्यत्वं तत्र तद्विषयिताभेदो न निवेशनीय इति साम्प्रतम्, दत्तोत्तरत्वात् । यदि तु परस्परस्वावच्छिन्नविषयिताशून्यत्वमुपेक्ष्योक्तरीत्या प्राप्तस्यासम्भवस्य भङ्गाय केनचित्प्रकारान्तरेण परिष्क्रियते, तदाऽभावो गगनाभाववानभेयत्वादित्यत्रासाधारण्येऽव्याप्तिः, तद्घटकव्यापकत्वे हेतुमत्पक्षप्रवेशेन तन्निश्चये ताद्दशविशिष्टद्वयविषयिताशून्यत्वाभावात्। विशिष्टद्वयविषयितायामसाधारण्यविषयिताभिन्नत्वनिवेशे तु सत्प्रतिपक्षविषयिताभिन्नत्वनिवेशवद्गौरवम् । एवं यथावच्छेदकधर्मसंदर्शनविधया प्रतिबन्धकं विशिष्टद्वयस्य समूहालम्बनमिव प्रत्येकं ज्ञानद्वयमपि न जातमिति सम्भाव्यते, तत्राव्याप्तिसम्भावनापि दोष एव ।

एवं प्रमेयत्वविशिष्टव्यभिचारादेरलक्ष्यतां स्वीकृत्य विशिष्टान्तराघटितत्वं निवेश्यते, धूमव्यभिचारिवह्निमत्त्वात् धूमवान् वह्नेरित्यादौ व्यभिचारघटितबाधादेरपि व्यभिचारात्मकविशिष्टान्तरघटितत्वेन तत्राव्याप्तिवारणाय तु स्वावच्छिन्नानिरूपितयत्किञ्चिद्विशिष्टविषयितावच्छेदकत्वाभाववत्प्रतिबन्धकतानतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकं यत्त्वं तद्रूपवत्त्वमनुमितिप्रतिबन्धकताघटितकल्पे विवक्ष्यते, तथासति व्यभिचारघटितबाधत्वावच्छिन्नानिरूपितव्यभिचारविषयितावच्छेदकताभाववतो ताद्दशबाधग्रहनिष्ठानुमितिनिरूपितप्रतिबन्धकतेत्यदोषः । न च सर्वं गगनवदित्यत्र गगनाभाववद्घटत्वावच्छिन्नानिरूपितगगनाभाववत्पटादिविषयित्वावच्छेद्यप्रतिबन्धकतायामेव गगनाभाववद्घटत्वावच्छिन्नविषयिताऽवच्छेदिकेत्यव्याप्तिरिति वाच्यम्, स्वावच्छिन्नानिरूपितविषयितायां स्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयत्वस्य विवक्षणीयत्वात्, एवञ्च ताद्दशज्ञानीयविषयिता बाधैकदेशविषयितेति तदनवच्छिन्नत्वमस्ति बाधप्रतिबन्धकतायामित्यदोषः । न च ज्ञानिमद्ह्रदभाववद्ध्रदत्वावच्छिन्नविषयिताव्यापकविषयिताशून्यज्ञानीयताद्दशह्रदत्वावच्छिन्नानिरूपितवह्न्यभाववद्ध्रदत्वावच्छिन्नविषयितासामान्यावच्छेद्यप्रतिबन्धकतावच्छेदकत्वमेव ज्ञानिमद्ह्रदाभाववद्ध्रदत्वावच्छिन्नविषयितायामिति तत्राव्याप्तिः, नहि ज्ञानिमान् वह्न्यभाववानिति ज्ञानीयवह्न्यभाववद्ध्रदत्वावच्छिन्नविषयितायां ज्ञानिमान् वह्न्यभाववान् ह्रद इति ज्ञाननिष्ठप्रतिबन्धकतावच्छेदकत्वं वर्तत इति वाच्यम्, यद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयत्वस्यापि स्वावच्छिन्नानिरूपितविषयितायां वक्तव्यत्वात्, एवं सति वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीया वह्न्यभाववद्ध्रदत्वावच्छिन्ना विषयिता ज्ञानिमान् वह्न्यभाववानिति ज्ञानस्यापूर्वैव, तत्सामान्यावच्छेद्यायामेव बाधप्रतिबन्धकतायां ज्ञानिमद्वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयितायाः अवच्छेदकत्वमिति नाव्याप्तिरिति वदन्ति । अत्रेदं वक्तव्यम्, ताद्दशावच्छेदकत्वाभावो विशेषाभावो वा विवक्षितसामान्याभावो वा, नाद्यः, मेयत्वविशिष्टव्यभिचारादावतिव्याप्तिनादवस्थ्यात्, सत्त्वावच्छिन्नानिरूपितव्यभिचारीयैकदेशविषयित्वानवच्छेदकस्य तज्ज्ञाननिष्ठप्रतिबन्धकतायां सत्त्वात् । न द्वितीयः, तस्य स्वरूपनयखण्डनावसरदशा भूयो निरस्तत्वात् । एतेन—अनुमित्यप्रतिबन्धकत्वघटितावच्छिन्नकल्पे विशिष्टान्तरविषयित्वाप्रयोज्यत्वविषयिताप्रयोज्यसाध्यावगाहित्वाद्युभयाभावप्रयोजकाभावाधिकरणताकत्वमेव विशिष्टान्तराघटितत्वं वक्तव्यम्, यत्किञ्चिद्विशिष्टान्तरविषयिताव्यापकत्वावच्छिन्नाप्रयोज्यत्वं तत्प्रयोज्यान्यार्थः, व्यभिचारघटितबाधादिस्थले च शुद्धव्यभिचारविषयितात्मकमेव ताद्दशं रूपम्, एवञ्च सद्दशव्यभिचारादिविषयितया बाधविषयितामात्रविषयितामात्रवृत्तित्वेन पक्षे साध्यावगाहिताविरहस्याप्रयोज्यत्वेऽपि नाव्याप्तिरित्यादिवक्तव्यम् । सर्वं गगनवदिति ज्ञानं प्रति गगनाभाववद्घटपटादिवि-

श्रयानां गगनाभावत्वावच्छिन्नप्रकारतानिरूपितावच्छिन्नविशेष्यताशालिनिश्चयत्वेनानुगतरूपेणैव प्रतिबन्धकतया गगनाभाववद्घटत्वावच्छिन्नविषयिताप्रयोज्यायां तादृशोभयाभावप्रयोजिकायां पक्षे साध्यत्वावगाहित्वाभावाधिकरणतायां गगनाभाववत्पटादिरूपविशिष्यान्तरविषयितात्वव्यापकगगनाभावत्वावच्छिन्नप्रकारतानिरूपितावच्छिन्नविशेष्यतात्वावच्छिन्नप्रयोजकतानिरूपितप्रयोज्यतायाः सत्त्वात्त्वपदेन गगनाभाववद्घटादेर्धर्तुमशक्यत्वादव्याप्तिवारणाय तु विशिष्टान्तरविषयितायां स्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयत्वमुपादेयमधिकं त्वन्यत्रानुसन्धेयमिति परास्तम् । अत्र यदि स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वसमानाधिकरणावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतानिरूपकविषयतानिष्ठावच्छेदकतानिरूपकवृत्तित्वनिष्ठावच्छेदकतानिरूपकभेदनिष्ठावच्छेदकतानिरूपकप्रतियोगितानिष्ठावच्छेदकतानिरूपकावच्छेदकतात्वावच्छिन्नप्रतियोगिताकाभावद्रूपावच्छिन्नप्रयोजकतानिरूपितप्रयोज्यता नास्तीति धीसिद्धः सामान्याभावो विवक्षितस्तदा स्फुटस्त्वन्यत्वखण्डनसञ्चारः, यदि तु विशेषाभावः, तदा मेयत्वविशिष्टव्यभिचारत्वावच्छिन्नविषयिताप्रयोज्यायां तादृशोभयाभावप्रयोजकहेतुधर्मिकव्याप्यत्वावगाहित्वाभावाधिकरणतायां तादृशव्यभिचारत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकत्वाभावावच्छिन्नविषयितात्वव्यापकरूपावच्छिन्नाप्रयोज्यत्वसत्त्वेनातिव्याप्तिनाद्वस्थ्यम् ।

एतेन जातिमान् वह्न्यभाववानित्यादिज्ञानस्यापि वह्न्यभाववद्ह्रदत्वाद्यवच्छिन्नविषयकत्वात् ह्रदो वह्निमानित्याद्यनुमित्यप्रतिबन्धकत्वाद्यसम्भवोऽपि समर्थितः । न च यद्रूपावच्छिन्नविषयितात्वं यद्रूपविशिष्टविषयकत्वसमानाधिकरणाभावप्रतियोगितावच्छेदकं तद्रूपावच्छिन्नविषयित्वशून्यतद्रूपविशिष्टविषयकनिश्चयत्वं प्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्ति तद्रूपवत्त्वं विवक्षणीयम्, वह्न्यभाववज्जातिमत्त्वावच्छिन्नविषयितात्वं वह्न्यभाववद्ह्रदत्वावच्छिन्नविषयितासमानाधिकरणाभावप्रतियोगितावच्छेदकमिति तदवच्छिन्नविषयिताशून्यमेव ज्ञानं ग्राह्यमिति वाच्यम्, ज्ञानविशेषवृत्तित्वविशिष्टवह्न्यभाववद्ह्रदत्वावच्छिन्नविषयित्वाभावस्यापि वह्न्यभाववद्ह्रदत्वावच्छिन्नविषयितासमानाधिकरणत्वासम्भवात् । एवं तज्ज्ञानवृत्तित्वविशिष्टवह्न्यभाववज्जातिमत्त्वावच्छिन्नविषयित्वशून्यत्वस्य जातिमान् वह्न्यभाववानिति ज्ञानेऽपि सत्त्वेन तस्य चाप्रतिबन्धकत्वेनाप्यसम्भवात् । यदि तु यद्रूपावच्छिन्नविषयितावद्वृत्तियं किञ्चिद्रूपावच्छिन्नविषयिता नास्तीति प्रतीतिसिद्धः किञ्चिद्रूपनिष्ठावच्छेदकताभिन्नावच्छिन्नत्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपकतादृशावच्छेदकत्वानिरूपकावच्छिन्नत्वनिष्ठावच्छेदकताभिन्नविषयितात्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपकप्रतियोगिताकोऽभावस्तदीयप्रतियोगिविषयिता नास्तीति प्रतीतिसिद्धाभावं तद्वृत्तित्वेनोपादाय तन्निष्ठावच्छेदकताभिन्ना सती यद्रूपावच्छिन्नविषयितानिष्ठावच्छेदकताभिन्ना तादृशनिश्चयत्वनिष्ठावच्छेदकताभिन्ना यावच्छेदकता तदनिरूपकेत्यादिरीत्या निश्चयनिष्ठावच्छेदकतानिरूपकवृत्तित्वनिष्ठावच्छेदकतानिरूपकभेदनिष्ठावच्छेदकतानिरूपकप्रतियोगित्वनिष्ठावच्छेदकतानिरूपकावच्छेदकतात्वावच्छिन्नप्रतियोगिताकाभावः प्रतिबन्धकतायां निवेश्यते तदापि स्फुटमन्यत्वखण्डनोक्तरीत्या तत्तदवच्छेदकतानिरूपकेऽपि तत्तदवच्छेदकतानिरूपकत्वाभावः सम्पाद्य इत्यसम्भवः, ह्रदो जात्यभाववानित्यादौ जातिमद्ह्रदेऽव्याप्तिश्च, जातिमान् जातिमानित्यप्रतिबन्धकीभूतज्ञानावारणात्, जातिमज्ज्ञानिष्ठत्वस्य जातिमत्त्वानतिरिक्ततया तदवच्छिन्नविषयत्वस्याव्यापकत्वानुपपत्तेः । यदि तु यद्रूपावच्छिन्नविषयितात्वमित्यादेर्यद्रूपावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकविषयितात्वं यादृशसमुदायवृत्तिसमुदायत्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकताकविषयित्वसमानाधिकरणाभावप्रतियोगितावच्छेदकमित्यादिकोऽर्थ उच्यते, तदापि समुदायत्वस्य धीविशेषविषयत्वरूपतया तज्ज्ञानवृत्तित्वविशिष्टवह्न्यभाववद्ह्रदत्वगतसमुदायत्वावच्छिन्नत्वादिघटितविषयत्वाभावस्य

वह्न्यभाववद्धृदत्वगतसमुदायत्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकविषयिताासमानाधिकरणत्वादसम्भवः, एवं तल्लक्षणघटितविशिष्टवह्न्यभाववज्जातिमत्त्वगतसमुदायत्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकविषयित्वाभावस्य वह्न्यभाववज्जातिमत्त्वावच्छिन्नविषयताकज्ञाने सत्त्वमाऽप्यसम्भवः। अत्रापीतरवारकप्रकारानुसरणे चोक्तरीत्यैवासम्भवः, अन्यथा त्वनवस्थेति। एतच्च विशिष्टान्तराघटितत्व-विशिष्टद्वयाघटितत्वयोरप्युक्तरीत्याऽव्यापकीभूतविषयिताशून्यत्वनिवेशस्यावश्यकत्वेन तत्रापि सर्वं समानमिति। एवं तत्र तत्र प्रविष्टानतिरिक्तवृत्तित्वादावपि समानोऽयं चर्च इति। एवं च ह्रदत्वादेर-भावरूपतोपगन्तृसौगतदृष्ट्याऽभावत्वेन ह्रदत्वावगाहिनि वह्न्यभाववानभाववानितिज्ञाने वह्न्यभाववद्धृद-त्वावच्छिन्नविषयत्वस्य तद्रूपेणाव्यापकीभूतविषयिताशून्यत्वस्यापि च तत्र सत्त्वेनासम्भवः प्रसञ्जनीयः, सर्वांशे प्रमात्वाविवक्षायां तु पूर्वोक्तं तत्खण्डनमवतारणीयम्। एवमत्र व्यापकतादेरपि प्रविष्टस्य दुर्ग्रहत्वमनुमानखण्डनोक्तरीत्याऽनुसन्धेयम्। प्रतिबध्यप्रतिबन्धकभावस्याप्रामाणिकत्वनिबन्धनस्त्वसम्भवः प्रागुक्त एव। एवं तत्तद्धर्मे दोषत्वनियमेऽपि प्रत्येकमिलितविकल्पानुपपत्तिरन्यतमत्वघटितकल्पवत्प्र-दृष्या, एकधर्मावच्छिन्नपक्षसाध्यहेतुकस्थलीयानां यावतां दोषाणामेकोन्तरत्वस्यादर्तव्यत्वात्, अन्यथा ऽनुमितिपदस्यानुमितिताकारणज्ञानोभयपरत्वोक्तिः समूहालम्बनानुमितिपरत्वोक्तिर्वोऽस्मिन्नुत्तरूपतामाल-म्बेत। दोषनिश्चयेऽनाहार्यत्वाप्रामाण्यज्ञानानास्कन्दितत्वाव्याप्यवृत्तित्वज्ञानानास्कन्दितत्वनिवेशनिबन्ध-नाश्च दोषाः स्मृत्यन्यत्वखण्डनोक्तप्रणाल्यैवानुसन्धेयाः।

ननु तथापि सत्त्वया सत्त्वया निष्कृष्टलक्षणेषु को दोष इत्युच्यतामिति चेत्सर्वं एव, अन्यथा निष्कृष्टलक्षणेषु दोष इति सप्तम्या सम्बन्धभानानुपपत्तेः, तस्यालीकत्वेऽसत्त्वस्यापत्तेः, तद्वत्सदुपरागा सम्भवाच्च, सत्त्वे चास्मदभीष्टसिद्धेः, सत्त्वासत्त्वाभ्यां सन्दिग्धत्वेऽपि दोषसंशये लक्षणत्वानुपपत्तिरेव। न च लक्षणनिष्ठविषयतानिरूपितदोषनिष्ठविषयताशालिज्ञानजननेऽनुयोगः, विषययोः सम्बन्धाभावे विषयितयोर्निरूप्यनिरूपकभावानुपपत्तेः। ननु तादृशधीविषयः संसर्गोऽपि सत्त्वेव किन्तु नासौ दोष-लक्षणयोः, अपि त्वन्यत्रैव प्रसिद्धः, न चैवं तस्य संसर्गस्यापि संसर्गेण ज्ञानविषयताऽऽसादनीयेति दोषप्रतियोगिकसम्बन्धानुयोगित्वस्य लक्षणेषु भाने तस्य लक्षणेषु सत्त्वासत्त्वादिनोक्तविकल्पदोषप्रसर इति वाच्यम्, सम्बन्धसम्बन्धाग्रहेऽपि विशिष्टबुद्धेः सम्भवादिति चेत्, सम्बन्धो हि किञ्चित्प्रतियोगिकः किञ्चिदनुयोगिक एव चानुभूयत इति सार्वजनीनम्, तथा च कथं न प्रतियोगित्वानुयोगित्वयो-र्विशिष्टधीविषयतेति। न च भूतले घटस्य संयोग इत्यादिबुद्धौ प्रतियोगित्वानुयोगित्वयोर्भानेऽपि संयो-गादेः संसर्गतया भानस्थले न तयोर्भानम्, नहि संयोगेन घटादिप्रकारिका धीरवगाहते ते इति वाच्यम्, संसर्गतया भासमानस्य सम्बन्धो न भासते इत्यस्य परिभाषामात्रत्वात्, नहीदं सर्वलोकसाक्षिकम्, तार्किकविशेषानुभवस्तु व्युत्पत्त्यनुसारित्वात्र वस्तुव्यवस्थापनायादरार्हः। अन्यथा घटादौ विशेषणता-दिकमपि न भायात्, न वा भवेत्, तस्य संसर्गीयप्रतियोगित्वादिरूपत्वात्, अतिरिक्त-पदार्थत्वे मानाभावात्, प्रकारतात्वादेः सम्बन्धविषयतानिरूपितप्रतियोगित्वविषयतानिरूपितविषय-तात्वादिरूपतापक्षेऽपि प्रतियोगित्वादिभानं ध्रुवमेव। नो चेत् 'संयोगो न रूपप्रतियोगिकः' 'संयोगो न प्रतियोगितयाऽनुयोगितया वा रूपविशिष्टः' 'रूपं न प्रतियोगितया संयोगविशिष्ट'मित्यादिधी-दशायामपि संयोगेन रूपादिप्रकारकबुद्धेरनुभवविरुद्धाया आपत्तेः। तस्माद्दोषसम्बन्धानुयोगित्वस्य लक्ष-णेषु भाने तस्य सत्त्वासत्त्वादिविकल्पः सावकाश एवेति। तदेतत्सर्वं सामान्यलक्षणखण्डनं नव्यपरि-ष्कृतहेत्वाभासविशेषलक्षणसाधारण्यमेवेति तत्र तत्रातिदेश्यमिति शिवम्।

हेत्वाभाससमाभासबुभुत्सूनां कृते कृतः। सामान्यलक्षणाक्षेपसंक्षेपोऽयं विजृम्भताम्॥

इति खण्डनशारदायां सामान्यनिरुक्तिखण्डनम्।

णम्, हेत्वाभासान्तराणामपि ह्यसिद्धप्रवेश एवं सति स्यात्, व्याप्तिं पक्षधर्मतां तत्प्रमितिं वा न विरुन्धतां हेतुदोषत्वासम्भवात् ।

## हेत्वाभासपाञ्चविध्योपपादनम् ।

नेदमीदृशम्, तथाहि—केचिद्दोषा व्याप्तिपक्षधर्मतातत्प्रमितिविरहात्मानः,

---

किमा कृतमाक्षेपमुपपादयति तथाहीत्यादिना । व्याप्तीत्यादि । प्रकृतसाध्यव्याप्तिप्रकृतपक्षधर्मताप्रकारकप्रमितेर्विशेष्यतासम्बन्धावच्छिन्नप्रतियोगिताकाभावोऽसिद्धिरित्यर्थः । ज्ञायमानस्यैव स्वरूपसतोऽपि प्रतिबन्धकस्य हेत्वाभासत्वे न काचित्क्षतिरिति प्राचामाशयः । नहि ज्ञानगर्भमेव तल्लक्षणमिति राजाज्ञा । आत्ममनोयोगाभावव्यभिनीज्ञिप्तसाध्यादेरपि हेत्वाभासत्वव्यवहारस्तु नैवमापद्यते, हेत्वाभासलक्षणानुगमासम्भवे वक्ष्यमाणरीत्या व्याप्तिपक्षधर्मताविरहादेरसिद्ध्यात्मकत्वासम्भवे च तादृशप्रमितिविरहस्यैवाभ्यस्य च हेत्वाभासत्वव्यवहारविषयस्यान्यतमत्वेन हेत्वाभाससामान्यलक्षणे निवेशनीयत्वात् । इष्टं च सिद्धेर्हेत्वाभासत्वं प्राचामित्यनुपदं व्यक्तीभविष्यति । वस्तुगत्याऽव्याप्येऽपक्षधर्मे वा व्याप्यत्वेन पक्षधर्मत्वेन वा निश्चितेऽव्याप्तिवारणाय प्रमितिस्थाने निश्चयो बोध्यः । सद्धेतोरेतादृशप्रमित्यविरहस्य दशायामसिद्धत्वं स्थितमेव, एवञ्च कालविशेषपुरुषविशेषनियमितत्वमसिद्धेरापादितमिति पक्ष्यत् । अग्रपदुपरिष्टाद्वक्ष्यते । हेत्वाभासेति । हेतुवदाभासा इति व्युत्पत्त्या दोषपरम् । असिद्धप्रवेश = असिद्धिप्रवेश । ननु कोऽयमसिद्धिप्रवेशः, असिद्धिरूपत्वं वा, असिद्धिव्याप्यत्वं वा, नाद्य, साध्याभावपक्षादिरूपबाधादेरसिद्ध्यनात्मकत्वात्, न द्वितीयः, इष्टापत्तेः, बाधादिस्थलेऽसिद्धेरावश्यकत्वात्, गन्धप्रागभावावच्छिन्नो घटो गन्धवान् पृथिवीत्वादित्यादावपि कालिकव्याप्यप्रमितेः सत्त्वात् तद्देशकालावच्छिन्नसाध्यानुमितिं प्रति च साधने तद्देशकालावच्छेदेनैव साध्यसामानाधिकरण्यग्रहस्य हेतुत्वात्, विरोधिपरामर्शदशायां सद्धेतोरपि सत्प्रतिपक्षत्वव्यवहारेऽपि तस्य दुष्टत्वाभावात्, मा भूदभावव्याप्यत्वपक्षाभावादित्याशङ्क्याह व्याप्तिमिति । वाकार समुच्चये । न विरुन्धतामिति । नञ्समासनियमता न प्रामाणिकीति भावः । विरुद्धत्वमभावव्याप्यत्वम् । अत्र द्वितीयान्तार्थस्य प्रमाव्यादिप्रतियोगिकत्वस्यान्वय । व्याप्तिपक्षधर्मताप्रमित्यभावव्याप्यत्वाभिधानस्यैव प्रकृते उचितत्वेऽपि तद्दूषकतापि व्याप्तिपक्षधर्मताऽभावव्याप्यत्वाभिधानमिति द्रष्टव्यम् प्रमित्यभावस्य विषयाभावप्रयोज्यत्वात् । तथा चासिद्धे सार्वत्रिकत्वे सैवैका हेत्वाभासोऽस्तु, सत्पञ्चत्वं तु पञ्चत्वमेव गतमित्यपि भाव ।

नेदमीदृशमिति । असिद्धिरेव हेत्वाभास इत्यादिनि त्वदभिप्रेतं न युक्तमित्यर्थः । असिद्धेर्यथाकथञ्चिदपि तदुद्भावनेन वादिनिवृत्तिविजयौ विपरीतकोटिसाधकहेतौ प्रामाण्यग्रहविघटनद्वारा तत्प्रतिक्षयश्च यथा, तथा लिङ्गविषया तज्ज्ञापकतया तदुपजीव्यस्य व्यभिचारादेः साक्षादनुमितिप्रतिबन्धकस्य सत्प्रतिपक्षादेश्चोद्भावनेनापीति पञ्चानामेव हेत्वाभासत्वं युक्तमिति भाव । एतदेव विशदयन्नाह तथाहीति । केचित् = असिद्धिशब्दिना व्यभिचाराद्युपजीव्या । अत्रानुमितिकारणविरहरूपतया तत्प्रयोजकतया, अनुमितिप्रतिबन्धकतया च दोषाणां विभागमभिप्रेत्य राशित्रयकरणम्, एवञ्च सति व्याप्तिपक्षधर्मताप्रमितेरिव प्रमीयमाणव्याप्तिपक्षधर्मतयोरपि कारणतया 'विशिष्टे कारणताग्राहकमानेन विशेषणेऽपि कारणता गृह्यते' इतिन्यायेनानुमन्तव्यतया व्याप्तिपक्षधर्मताप्रमितिविरहस्येव तद्विषयविरहस्याप्यासिद्धिरूपत्वमौचित्यादाक्षिप्तमिति 'तत्प्रमितिविरहे'त्यत्र तत्पदस्य साम्प्रतिकः । न च प्रमितिविरहं प्रति विषयविरहस्य प्रयोजकत्वात्तस्यैवासिद्धित्वमुचितम्,

अथोच्यते—व्याप्तिपक्षधर्मताभङ्गाभङ्गरूपप्रकृतहेत्वपेक्षविशेषवत्तयाऽनुद्भाव्यमानेन बोधितो यदीयसाध्यस्य विपर्ययः स प्रकृतः सत्प्रतिपक्ष इति, तदपि नोपपन्नम्, यदि परः 'त्वदीयोऽयं प्रतिहेतुरित्थं भग्नव्याप्तिक' इत्येवाभिधत्ते न तु 'मद्धेतुतोऽयं विशेष' इत्यपि ब्रूते, आभासत्वव्युत्पादनादेव प्रतिहेतोः सत्प्रतिपक्षताभङ्गात्, तदापीत्थं सत्प्रतिपक्षता न निवर्तेत, तथा सति च प्रतीयमानासिद्धयादिनापि सत्प्रतिपक्षीकरणमिति साधु व्युत्पादितं सर्वानुमानानुकूलं स्यात्। किञ्च कस्मिन् काले तथानुद्भाव्यमानत्वमपेक्षितम्? यदि यदा प्रतिहेतूद्भावनेन परहेतुं दूषयति प्रतिवादी तस्मिन् कालेऽनुद्भावनम्, तदा पश्चादुक्तेऽपि प्रतिहेतुदोषे पूर्वकालिकानुद्भावने प्रतीकारो न स्यादिति सर्वहेत्वाभासैः सत्प्रतिपक्षीकरणमदुष्टमिति गतमनुमानकथया। अथ प्रतिवादिनाऽभिहिते यदा पुनर्वादिवचनावसरः, तदानुद्भावनमिष्टम्, तर्हि तत्कथमग्रे प्रत्यनुमानवादिनावधारणीयम् 'अयमत्र विशेषतो दोषं नोद्भावयिष्यती'ति। दोषशून्यत्वात्स्वकीयस्य प्रतिहेतोः समर्थस्तथाऽवधारयितुमिति चेत्, उक्तमत्र प्रतीतदोषेणापि सत्प्रतिपक्षताकरणं सम्भवति, तत्र परेण दोषेऽनुद्भाविते विजयश्च भवतीति। किञ्च विशेषदोषशून्यत्वमपि स्वकीयहेतौ कथमयमवधारयेत् विरुद्धार्थयोस्तावद्धेत्वोरेकस्यावश्यं दोषेण भाव्यम्, तत्र यथा तेन स्वहेतौ दोषो न दृश्यते तथा परहेतावपि तद्दर्शने तमेवोद्भावयेत्, कोहि सचेता निश्चितं दोषमुपेक्ष्य सदोषस्य निर्दोषसाम्येन प्रत्यवतिष्ठेत, तस्मात्सदोषेऽपि दोषमपश्यन्नयं न स्वेनादर्शनं दोषाभावे प्रमाणयितुमर्ह

---

भावेनाशङ्कते अथेत्यादिना। तदापीति। इदमुपलक्षणम्—स्वार्थे व्याप्त्यादिभङ्गस्य सर्वथैवोद्भावनं नास्ति, अपि तु प्रतीतिरेवेति तत्राप्यतिव्याप्ते। सर्वेति परार्थसर्वपरम्, स्वार्थे प्रतीयमानासिद्धयादिकं दुष्टत्वन्तरोपस्थितेरनियमात्। ननु विशेषतयाऽनुद्भावितत्वं नाम विशेषत्वप्रकारकप्रतीतियोग्योद्भावनविषयत्वाभावः, स्वहेतुर्भग्नव्याप्तिक इत्युद्भावनमपि तादृशप्रतीतियोग्यमेवेति नोक्तातिप्रसङ्गः व्याप्त्यादिभङ्गस्य हेतुद्वयसाधारण्यमहत्स्थलेऽपि तादृशयोग्यस्योद्भावनेऽक्षतमेव, न च तथापि स्वार्थेऽतिप्रसक्तता दवस्थ्यम्, परार्थस्थलीयसत्प्रतिपक्षताया एवेह निर्वक्तव्यत्वादित्यरुचेराह किञ्चेति। पूर्वकालिकानुद्भावने प्रतीकारः = पूर्वकालिकानुद्भावनविघटकः। अनुमानकथया = परार्थानुमानेन। अग्रे = सत्प्रतिपक्षताप्रतिज्ञानात् पूर्वम्। विशेषतः = विशेषत्वप्रकारकप्रतीतियोग्यं यथा स्यात्तथेत्यर्थः। तथा च सत्प्रतिपक्षतां प्रतिज्ञाय तदुत्पादनासम्भव इति भावः। अवधारणोपायमाशङ्कते दोषशून्यत्वादिति। दोषशून्यत्वग्रहादित्यर्थः। यद्यप्यसन्तमपि दोषं कदाचिदुद्भावयति परः न च तदुद्भावनं दोषस्य विशेषतः प्रत्ययं नार्जयति अतो दोषशून्यत्वग्रहो नावतीति वाच्यम्, माऽर्जयतु, योग्यताया अक्षतत्वात्, न हि प्रतिबन्धकसमवधाने योग्यताऽपगच्छति, तथापि स्फुरणादित्युपेक्ष्याह उक्तमत्रेति। सम्भवतीति। इत्थं सत्प्रतिपक्षीकरणस्य निष्फलत्वेनाभावमाशङ्क्याह तत्रेति। न केवलं विशिष्य निश्चितदोषेण सत्प्रतिपक्षेऽपि त्वन्यत्रापि सत्प्रतिपक्षे दोषशून्यत्वनिश्चयासम्भव इत्याह किञ्चेति। विशेषेति विशेषत्वप्रकारक सत्प्रत्ययंऽवधारयेदित्यन्वयेति। अपश्यन् = अनुद्भाव्य। सदोषस्य = सदोषतया निश्चितस्य परकीयहेतोः। निर्दोषसाम्येन प्रत्यवस्थानं निर्दोषतया निश्चितस्वकीयहेतुना साम्यप्रतिपत्तिफलकं सत्प्रतिपक्षीकरणम्। अविशेषज्ञस्य स्वकीये हेतौ दोषनसम्भवे समबलत्वं न बोधयितुमुचितमिति भावः। सदोषेऽपि = सदोषत्वेन सम्भाव्यमानेऽपि परहेतौ। अपश्यन्निति। विनिश्चित्यानिश्चि-

तीति । अथोच्यते—व्याप्तिपक्षधर्मताभङ्गाभङ्गरूपमहत्तद्धेत्वपेक्षविशेषणत्वेनानुद्भाव्यतया सम्भाव्यमानेन योधितो यदीयसाध्यस्य विपर्ययः स प्रकृतः प्रकरणसम इति; नैतदपि सुस्थम्, यद्युद्भावनकालात्पूर्वकालिकी सम्भावना विवक्षिता, तदा तात्कालिकानुद्भावनपक्षोक्त एव दोषोऽतिदेष्टव्यः; अथोद्भावनस्य योऽवसरो भविष्यति तात्कालिकतया, तदा सत्प्रतिपक्षतात्पुत्पादनकाले सा नास्तीति विशेषणाभावाल्लक्षणाभावः । अथोच्यते- यावत्सम्भावनाऽनुवर्तते तावत्सत्प्रतिपक्षता किं सम्भावनायाः कालनियमगवेषणेन । नैवम्, एवं हि प्रतिहेतौ दोषेऽनुद्भाविते प्रत्युत निर्दोषतयैव स्वीकृते दोषानुद्भावनसम्भावनाया निवृत्तेः सत्प्रतिपक्षता व्यावर्तेत, तथा चेत्थङ्कारमेव वादी सत्प्रतिपक्षतां परिहरेदिति साधु स्यात् सत्प्रतिहेतोः प्रतिक्षेपमकृत्वा स्वीकृत्यैव न सत्प्रतिपक्षता प्रतिक्षेप्तव्येति । न च स्वीकारादेव प्रतिहेतोः पराजयः स्यात्, सत्प्रतिपक्षतापरिहारोपायतया स्वीकारस्य करणात्, स्वीकारे सति सम्भावनानिवृत्त्या तल्लक्षणकस्य सत्प्रतिपक्षताया अपि निवृत्तेः, तस्मात्स्वीकारेऽप्ययं परस्यानिष्टार्थं सिद्धसाधने परकीयसाध्यस्यो-

---

स्यात् । एतेन मदीयो हेतुरदुष्टो मया दोषपरेण विनिपातनिश्चितव्याप्तिपक्ष सन्दिग्धानैकान्तिकत्वमुक्तम् । अनुद्भावनकालभावकाले साध्याभावसन्देहजनक हेतुनिश्चयेऽपि तस्य दोषत्वात् । अत एव योग्यानुद्भाव्यस्यापि न दोषविरहावगमः, सदोषत्वसम्भावनायाः सत्त्वात् । अयं = प्रतिहेतुप्रयोक्ता । ननु दोषानुद्भावनस्य प्रथमं निश्चेतुमशक्यत्वेऽपि तत्सम्भावनामात्रादेव प्रतिहेतुप्रयोगः स्यात्, साम्प्रतिपक्षितत्वप्रतिज्ञाया, मा वा भवतु, तेन विनाऽपि प्रतिहेतुप्रयोगे पश्चात्परेण दोषानुद्भावनेऽभीष्टसिद्धेरित्यभिप्रायेणाशङ्कते अथेत्यादि । सम्भाव्यमानेनेति । यद्यपि सम्भावनायाः क्षणे नियेतं विनाऽपि एतौ न्यायोत्तरमप्रयः । प्रत्युत तन्निवेशे पूर्वतद्ग्रहव्याप्त्यपेक्षानियतानुपपत्तिः, स्वरूपसत्येन च सोऽपि दुष्टत्वनाशो विशीतानभोगि, तथापि लक्षणं सम्भावनापरिहारेणैव स्यादित्येवमुक्तमन्यथासाधकत्वाय, ज्ञानं हि स्वनिष्ठसम्भावनाया न दुर्लभम् । तथा च व्याप्त्यादिभङ्गादिः स्यादेव विशेषणतया याहस्थितिग्रन्थेनानुद्भाव्यतया सम्भावितत्वनिश्चयविपयताविषयितेत्यादिश्लक्षणं द्रष्टव्यम् । उद्भावनकालादिति । स्थापनाहेतुप्रयोग इत्यर्थः, यद्वा, प्रतिहेतुन्यास इति द्वितीया, प्रतिहेतौ दोषोद्भावनमिति तृतीया, तत्काला दिरर्थः । तात्कालिकीति । पूर्वोक्तप्रत्यासत्त्याभिप्रेत्यर्थः । अतिदेष्टव्य इति । पूर्वापरयोर्दोषोद्भावनेऽपि सत्प्रतिपक्षता न निवर्तेत, तत्कालिकया दोषानुद्भावनसम्भावनया घटितस्य लक्षणस्य सद्भावादिति भावः । योऽवसर इति । तृतीयकक्ष्येत्यर्थः । तात्कालिकतयेति । दोषानुद्भावनसम्भावना विवक्षितेत्यनु-

कारवदुद्गुणाय स्वीकर्तुं न दोषायेति ।

यदि च सत्प्रतिपक्षो वादिना समानबलप्रतिपक्षदर्शनजनितात्स्वहेतावाभासत्व संशयात्, तदा क्वचिदपि नास्ति सत्प्रतिपक्षता, स्वहेतुपक्षपातेन परहेतावेव दोषः कश्चिदस्ति मया तु न गृह्यते इति ताभ्यां मन्यमानत्वात्, यदाह "निश्चितौ हि वादं कुरुत" इति । अथौचित्यादावर्जितसंशयेन सत्प्रतिपक्षता स्यात्, तदा सर्वत्रैव वादे

---

त्वमिति मिष्कर्षानुसारिण । न दोषायेति। निग्रहो हि न्यूनभाव, विजयफलक च परमतानुज्ञान प्रकृ- ष्यति न तस्य निग्राहकत्वमिति भाव । यदि तु सत्प्रतिपक्षतापरिहारोपायतया परमतस्वीकारेण वृश्चिक भिया पलायमानस्याशीविषमुखे सन्निपतनमेव सत्प्रतिपक्षताकारण हि परमतसिद्धिविघटनाय, स्थापना वादिना प्रतिहेतोरेव निर्दोषत्वस्वीकारे तु मा नाम तिष्ठतु सत्प्रतिपक्षता, तथा साधनीय तु सिद्धमेव, अत एव विमत पाक पाकपूर्वकालीन पाकत्वादतीतपाकवदित्यत्र चरमपाके व्यभिचारज्ञानस्य साध्य सिद्ध्युपजीवकतयाऽदोषत्वमाहु, किञ्च प्रतिहेतोर्निर्दोषत्वस्वीकारे तेनाधिकबलेन बाध एवेति च स्थापना नुमानस्येति सत्प्रतिपक्षतारक्षण तत्र कस्मै रोचेत । आस्ता वा कथमपि तुल्यायव्ययत्वमेव, सिद्धसाध नेऽपि पूर्वमस्वीकृतस्य स्वीकार न निग्रहस्थानान्तरासस्पर्शिनमाक्षामह इति भेद मानसमावर्णयति निरसनम्, तत्रापि परामर्शद्वयेऽन्यतरस्मिन् वाऽप्रामाण्यग्रहेऽपि कदाचिद्व्याप्त्यादिभङ्गस्यानुमापकतया सम्भावितत्वसम्भवेनातिप्रसङ्ग, व्याप्तिविशेषप्रवेशनिबन्धनोऽप्रामाण्यग्रहप्रवेशनिबन्धनश्च दूषणसमूह, स्वार्थस्थले सत्प्रतिपक्षतान्तरस्य निर्वचनासम्भवेन तत्रत्यसत्प्रतिपक्षासङ्ग्रहश्चेत्यादिक द्रष्टव्यम् ।

फलद्वारक लक्षण निराकरोति यदीत्यादिना । समानबलेति । समानबलत्वेनेत्यर्थ । प्रतिपक्ष = प्रतिहेतु, तच्चद्वयोरेव परस्परम् । स्वहेताविति स्वस्वमकिञ्चित्करम्, तथा च हेतुद्वय लाभ । स्वहेतौ समीचीनत्वस्य परहेतौ चासमाचीनत्वस्याभिमाने हेतुद्वये आभासत्वानाभासत्वसशया सम्भवेनाप्रिमग्रन्थसामञ्जस्यात् । आभासत्वसशयादिति । अनैकान्तिके तु साध्यसशय इति भाव । सत्प्रतिपक्षो दूषणमित्यध्याहृत्य सम्बन्ध । विरोधिपरामर्शद्वयसम्बलनमनुमित्यजनकमिति तदर्थ । पञ्चम्यर्थप्रयोज्यत्वस्य चानकेऽन्वय । यद्यपि 'अनयोर्हेत्वो क समीचीन' इति जिज्ञासामेवोद्भावना चार्या सत्प्रतिपक्षफलतयोपवर्णितवन्त, तथापि सा समीहितोपायतामतिगम्या, समीहितश्च प्रकृ तु त्वाभाव, तु त्वमकश्च हेत्वो समीचीनत्वासमाचीनत्वसशय इति ■ एव प्रथमापरिथम वारफल्येनोक्त, तथा च प्रकृतहेतुसमाचीनत्वासमाचीनत्वसशयजनकोपस्थिति सत्प्रतिपक्ष इत्यर्थ । नास्ति = न स्यात । पक्षपातेनेति । समाचीनत्वाभिमानेनेत्यर्थ । मन्यमानत्वादिति सम्बन्ध । यदाहेति । तात्पर्यटीकाकृदितिशेष । वाद = कथाम् । ननु विनिर्णेतृकनरहतौ दोषादर्शनदशायां स्यादेव सशय, सामग्रीसत्त्वात्, अत एव "निश्चितौ" इत्यस्य निश्चयवन्ताविति नार्थ, किन्तु निश्चयवत्वेन स्वज्ञाप काविति अत एव स्वोत्कर्षख्यापनार्थं परपक्षमात्रेऽन्यापि कथायां प्रवृत्तिर्दृश्यत इत्याशयेनाह अथेति । औचित्यादावर्जितेति । स्वसामग्रीवशनिष्पन्नेत्यर्थ । वादे = कथायाम् । स्वार्थे विरोधि परामर्शान्तरोपस्थित्यनियमादिदमुक्तम् । परार्थे तु यत्र सत्प्रतिपक्षमकृत्वा व्यभिचारादिदोषान्तरेणैव स्थापना येन निरस्यते, तत्रापि तदनन्तर तेन स्वमतस्थापनाऽपि कार्येति न विरोध्युपस्थितिर्दुर्लभा, किन्त्वेवं वितण्डायां न सम्भव इति तदनिरिक्तमात्रासर्वपदमत्रोच समुचित, अथ सूक्ष्मविषयेषु विचार कामौ विप्रतिपत्त्यौ स्यातां इति कथा अपि सम्यक्, न स्वनायाममसाध्यदुष्टताज्ञसिद्धेतु, तथा च स्वस्वर्थाविषमकारानुमारिणोऽनुमानस्यानिराशीस्यमनुभवतो वादिनो प्रकृतसाध्याभाववाप्योऽपि

## बाधखण्डनम् ।

प्रकारभेदाभावाच्च न कालात्ययापदिष्टः पृथक्, तद्यथा बाधितविषयः कालात्ययापदिष्ट इत्यलक्षणम्, तथाहि—बाधितविषयत्वं किं विवक्षितम्? न तावद्बलवता बोधितो विषयविपर्ययो यस्य तत्त्वम्, यथाश्रुतस्य सत्प्रतिपक्षेऽपि गतत्वात् । तत्र प्रत्यनुमानस्य प्रथमानुमानविपर्ययबोधकस्य पक्षधर्मतादिबलसम्भवात् । अथ बलवतेत्यधिकबलेनेति विवक्षितम्, तदापि केवलव्यतिरेकिणोऽन्वयव्यतिरेकिणा सप्रतिपक्षे गतत्वादतिव्यापकत्वम्, तत्रान्वयव्यतिरेकिणः प्रतिहेतोः सपक्षसत्त्वलक्षणबलाधिक्यसम्भवात् । किञ्चैवं प्रत्यक्षेणानुमानाभासबाधो न स्यात्, प्रत्यक्षस्येन्द्रियार्थसन्निकर्षोत्पन्नाभ्रान्तज्ञानकरणत्वमात्रं बलम्, अनुमानस्य तु पक्षधर्मत्वादि भूयिष्ठं बलमिति । अथ मन्यसे—अनन्यथासिद्धत्वं बलं विवक्षितमिदमुच्यते, तेनानन्यथासिद्धेन बोधितो यदीयसाध्यस्य व्यतिरेकस्तत्त्वं बाधितविषयत्वमिति; नैवम्, तथापि वस्तुतोऽनन्यथा-

सिद्धेन सत्प्रतिपक्षेऽपि गतत्वादतिव्यापकत्वम् । किञ्चान्यथेत्यन्येन प्रकारेणेत्युच्यते, अनन्यथेति चानन्येन प्रकारेण, यस्मादन्यत्वं तेनैवेत्यर्थः सम्पद्यते, तथा च वक्तव्यं किं तदन्यताप्रतियोगीति । प्रामाण्यं तदिति चेदहो दुर्वैदग्धी भवतः, प्रामाण्येनेति वक्तव्ये प्रामाण्याद्योऽन्यः स यो न भवति तेन प्रकारेण यः सिद्धः = उत्पन्नः प्रतीतो वा तेनेति प्रमाणस्य ।

तथापि प्रमाणेन बोधितविपर्ययो विषयो यस्य स कालात्ययापदिष्ट इति; न, इदं रजतमिति शुक्तिं विषयीकुर्वति प्रत्यक्षाभासे नेदं रजतमिति प्रमाणेन बाध्यमानेऽपि हेत्वाभासविशेषलक्षणमिदं गच्छदतिव्यापकत्वमापद्येत । एवं बाध्यविषयिण्यामिच्छायामपि गच्छेत् । प्रमाणेन बोधितो यदीयविषयस्यान्यथाभावः स हेतुः कालात्ययापदिष्ट इति चेन्न, यदि मुख्यार्थो हेतुशब्दः, तदा हेत्वाभासत्वव्याघातः, अथामुख्यार्थः, तदा कोऽस्यार्थो यत्रैष व्यवस्थाप्यते इति सोऽभिधातव्यः । प्रमाणेन बोधितो यदीयविषयस्य व्यतिरेकः स हेत्वाभासः कालात्ययापदिष्ट इति चेन्न, यद्यग्रे हेत्वाभासत्वानिश्चयस्तदा लक्षणस्य दुरवधारणत्वम्, अथ कालात्ययापदिष्टत्वेऽनिरूपिते एव

---

नन्वनन्यथासिद्धे निश्चितप्रामाण्यकत्वं विशेषणीयम्, सत्प्रतिपक्षतादशायां वस्तुतोऽनन्यथासिद्धोऽपि न निश्चितप्रामाण्यकः प्रतिहेतुरिति नातिव्याप्तिरित्यरुचेराह किञ्चेति । इति प्रमाणस्य भवतो दुर्वैदग्धीत्यन्वयः । दुर्वैदग्धी कुकौशलम् । उत्पन्न इति । अत्र पक्षे तृतीया वैशिष्ट्ये, तथा च प्रामाण्यविशिष्ट उत्पन्नः, वस्तुतः प्रमाणमिति यावत् । एवं विवक्षायां निश्चितप्रामाण्यकत्वस्यापि पृथङ्निवेशनीयत्वेन गौरवमित्यतो लाघवादाह प्रतीत इति । प्रमित इत्यर्थः । प्रमितप्रामाण्यकत्वञ्च प्रमाण एवेति निरवद्यो-त्वरक्षायै प्रमाणेनेति पृथङ् न वक्तव्यमिति भावः । प्रमाणस्येति । नहि कश्चिदसन्दो घट इति वक्तव्येऽनघट इति ब्रूते इति भावः ।

नन्वन्यथासिद्धशब्देन नञः समासो नत्वन्यथाशब्देनेति नाकौशलम्, एवमप्यनुचितं चेद्गौरवमुद्गिरसि, तर्हि तत्स्थाने शब्दान्तरमेव प्रयोक्ष्यते कोऽत्र निर्बन्ध इत्याशयेनाशङ्कते तथापीति । प्रमाणेन = प्रमितप्रामाण्यकेन । वस्तुतस्तु बोधितत्वं योग्यतासाधारणं न विवक्षणीयमिति सत्प्रतिपक्षे नातिव्याप्तिशङ्कापि, तत्र साध्याभावनिर्णयानुत्पत्तेः सर्वसत्प्रतिपक्षस्थलात्, एवञ्च सत्प्रतिपक्षेऽतिव्याप्तिवारणाय न तृतीयान्तमिदानीं वक्तव्यम्, अपि तु सत्यपि साध्याभावग्रहे तत्र प्रमात्वस्यानिश्चयेऽनुमितिं न प्रतिबध्यत इति मते निश्चितप्रमात्वाश्रयग्रहविषयीभूतप्रकृतधर्मिवृत्त्यभावप्रतियोगिसाध्यकत्वं बाधितत्वं वक्तव्यम्, अगृहीताप्रामाण्यकत्वेनैव साध्याभावनिश्चयस्यानुमितिप्रतिबन्धकत्वमते त्वगृहीताप्रामाण्यकप्रमितिविषयीभूतेत्यादिकम् । हेत्वाभासेति दुष्टपरम्, तत्प्रत्यक्षाभासो हि स्वलिङ्गकानुमितिस्थले बाधितहेत्वाभासतया व्यवह्रियते नत्वन्यत्रेति भावः । गच्छदिति । सिद्धिविषयत्वरूपं साध्यत्वमक्षतं रजतेऽपि व्यापकत्वरूपं तु निवेशानर्हम्, ह्रदो धूमवान् वह्नेरित्यादावपि बाधादिति । बाध्यविषयिण्याम् = शुक्तौ रजतादिविषयिकायां भ्रमजन्यायाम् । इच्छापदं कृत्यादेरप्युपलक्षकम् । अन्यथाभावः = अभावः । तथाच निरुक्ताभावप्रतियोगिसाध्यकहेतुत्वं लक्षणम् । मुख्यार्थः = व्याप्तिविशिष्टपक्षधर्मत्वार्थकः । व्याघात इति । बाधेऽपि व्याप्तिपक्षधर्मतान्यतरभङ्गनियमस्य वक्ष्यमाणत्वादिति भावः । एष हेतुशब्दः । व्यवस्थाप्यते = अमुख्यतया विवक्ष्यते । हेत्वाभास एव तस्यामुख्योऽर्थ इत्याह प्रमाणेनेति । अग्रे = उक्तबाधितग्रहदशायाम् । निर्णय इति । व्यभिचारादिग्रहादित्यादि ।

हेत्वाभासत्वस्य निर्णयस्तदा तत एव दुष्टत्वसिद्धेः कृतं पश्चात्प्रतीतिकस्य कालात्ययापदेशस्योपन्यासेनेति । तदिदं स्वन्मते लक्षणमस्तु मा वा भूत्, सामुद्रिकप्रमाणेन पुनर्महदेतल्लक्षणं कालात्ययापदेशस्य, येनास्य नाम हेत्वाभासभेदपदभ्रंशः प्रासाधि। अथ मन्ये हेत्वाभासत्वं हेतुवदाभासमानत्वं हेतुसदृशतया प्रतीयमानत्वं न तु हेतुदोषवत्त्वमिति, नैवम्, हेतुना तुल्यता ह्यहेतुत्वावगमं विना न शक्यप्रतिपत्तिः, सादृश्यस्य भेदाधिष्ठानस्य तथैव प्रतीतेः, अन्यथा हेतोरपि हेत्वाभासत्वापातात्, ततश्च हेतुरूपत्रैकल्यस्यावश्यं प्रत्येतव्यत्वेन प्रागुक्तदोषानिवृत्तिः । प्रमाणेन बोध्यमानो यदीयपक्षव्यतिरेकः स कालात्ययापदिष्ट इति चेन्न, आश्रयासिद्धव्यापनात् । आश्रयासिद्धव्यतिरिक्त इति विशेषणीयमिति चेन्न, विशेषणाद्यसिद्ध्याऽऽश्रयासिद्धेन सह सङ्कीर्णकालात्ययापदिष्टो-

---

ततः = व्यभिचारादिग्रहात् । दुष्टत्वसिद्धेरिति । अनुमित्यनुत्पादरूपफलसिद्धेरिति नोक्तम्, उक्तलक्षणज्ञानस्य तादृशफलकत्वानभ्युपगमात्, साध्याभाववत्पक्षादिज्ञानस्यैव तादृशफलकत्वात् । तथाऽभ्युपगन्तारं प्रति तु फलसिद्धेरित्यपि वक्तुं शक्यते । उपन्यासेनेति । दोषतया पृथग्गणनेनेत्यर्थः । पृथक् स्वार्थसाधारण्यनिर्वाहः, तद्भावस्य परार्थ एव प्रसक्तत्वादिति । येन = तल्लक्षणेन । अस्य = कालात्ययापदेशस्य । हेत्वाभासभेदो हेत्वाभासस्य भेदको धर्मो हेत्वाभासत्वं तदेव पदं तस्माद् भ्रंशः । यथा मरणापरपर्यायजीवनकालात्ययप्रतिपत्तिहेतोः रेखाविशेषस्यालक्षणत्वम्, कुत्सितलक्षणत्वमिति यावत्, तथा कालात्ययापदेशस्य बाधतया प्रसिद्धस्योक्तरीत्या मरणवैनाश्यवसितहेत्वाभासत्वपदभ्रष्टत्वबोधकत्वेन प्रस्तुतलक्षणस्याप्यलक्षणत्वमेवेति भावः । न हेतुदोषवत्त्वमिति । तथा च बाधग्रहात्पूर्वं दुष्टत्वप्रतीतिनिबन्धनो न दोष इति भावः । भेदाधिष्ठानस्य = अनुयोगिप्रतियोगिभेदवदिनस्य । तथैव = सादृश्यभेदधीपुरस्सरमेव । अन्यथा = सादृश्यस्योक्तभेदाघटितत्वे । हेतुरूपं पक्षसत्त्वसपक्षसत्त्वादि । अवश्यमिति । तत्पक्षकतत्साध्यकस्थले नायं हेतुरितिप्रतीतेर्हेतुताविरोधिस्वरूपासिद्ध्यादिप्रत्ययं विनानुपपत्तेरिति भावः । प्रागुक्तेति । स्वरूपासिद्ध्यादिनैव दुष्टत्वोपपत्तौ बाधस्य दोषतया स्वातन्त्र्येण परिगणनमनुचितमिति भावः । यदीयपक्षव्यतिरेक = यदीयसाध्यकस्थलीयपक्षत्वाभावः, तस्य बाधग्रहविषयत्वानियमेऽपि किञ्चित्प्रमाणबोध्यत्वमबाधमेव, आश्रयासिद्ध्यादिस्थले प्रत्यक्षानुरोधेन बाधप्रमितेः प्रमाणपदेनाविवक्षणीयत्वात्, बाधग्रहे च सन्देहतयोग्यतासिषाधयिषाविरहसत्त्वे तन्नाम सम्भवात्तदभावस्य प्रमाणबोध्यत्वं नानुपपन्नम् । यद्यपि बाधग्रहेऽपि सिषाधयिषासम्भवतोऽन्यथाऽऽहार्यज्ञानानुपपत्तेः, तथाप्यनुमितेरनाहार्यत्वेन तदिष्टा न बाधग्रहे सति सम्भविनी । सिषाधयिषाविरहविशिष्टसिद्ध्यभावरूपपक्षत्वाभिप्रायेण तु नायं ग्रन्थः, तस्य बाधग्रहे सत्यपि सम्भवात् । प्रत्यक्षाभासादौ व्यभिचारादावपि पक्षत्वाप्रसक्त्या तदभावो न प्रमाणबोध्य इत्याभासः । यद्यपि तत्र पक्षत्वस्य प्रसक्तिरस्तु मा वा, तदभावोऽनपवादः, केवलप्रसक्तस्य प्रतिषेधो न क्रियते सर्वेऽपि मा, तदपि चानियतमेव, बहुश तथा दर्शनात्, स्वार्थसाधारण्याय परं प्रति प्रमाणप्रयोगस्य पक्षत्वविरहेऽविशेषणीयत्वाच्च, कथमिव चेदं रजतमित्यादिज्ञानेऽधर्मिणो दृष्टत्वादौ रजतत्वादिसन्देहादेः प्रसक्तिः कादाचित्की दुर्लभाऽपि, बाधकाभावात्, न चानुमितिसामग्र्यनुमितिरेव स्यात्, परामर्शविरहे तदसम्भवात् । वस्तुतस्तु बाधग्रहे सत्यप्यनुमितिरूपाया इष्टसाधनताबोधाधीनाया असम्भवो न लौकिकं कल्याम । तथाऽभ्युपेत्याह आश्रयासिद्धेति । पर्वतो वह्निमान् धूमादित्यादावपि नाश्रयासिद्धेरयं, तत्र सिद्धिदशायां पक्षताविरहस्य प्रामाणिकत्वात् । विशेषणादीति । यद्यपि काञ्चनमयपर्वतो वह्निमान् धूमादित्यादावाश्रयविशेषणासिद्ध्यैवाश्रयासिद्धिमुपयन्ति अप्रसिद्धप्रतियोगिकाभावानभ्युपगमेन गगनारविन्दं

दाहरणमेवं न व्याप्येत। प्रमाणेन बोध्यमानो यदीयसाध्यस्य व्यतिरेकः स कालात्ययापदिष्ट इति चेन्न, प्रत्यक्षाभासव्यापनात्, तत्रापि हि साध्यस्य ज्ञाप्यरूपस्य व्यतिरेको बोध्यत एव। प्रमाणेन बोध्यमानो यदीयस्य साध्यस्य = व्यापकस्य व्यतिरेकः स कालात्ययापदिष्ट इति चेन्न, प्रमाणेन बोध्यमानाभावस्य प्रकृते हेतुव्यापकत्वासम्भवात्। प्रमाणेन बोध्यमानो यदीयसाध्यस्य प्रतिज्ञातस्याभावः स कालात्ययापदिष्ट इति चेन्न, स्वार्थानुमाने कालात्ययापदिष्टस्यैवमव्यापनात्, तत्र शब्दरूपस्य प्रतिज्ञानस्याभावात्, शब्दस्य परार्थत्वात्। प्रमाणेन बोध्यमानो यदीयसाध्यस्य पक्षनिविष्टस्य व्यतिरेकः स कालात्ययापदिष्ट इति चेन्न तथाभूतस्य पक्षाभासत्वाभ्युपगमेन मुख्यपक्षार्थत्वासम्भवात्, पक्षाभासनिविष्टस्येति क्रियमाणे तु पूर्वं पक्षाभासत्वप्रतीत्यप्रतीतिपक्षयोः पूर्वं हेत्वाभासत्वप्रतीत्यप्रतीतिपक्षोक्तदोषवद्दोषो द्रष्टव्यः। पक्षत्वाभिमतांशभूतस्येति

---

सुरभीत्यादावाश्रयासिद्ध्यनङ्गीकारात्, तत्र निश्चितान्वयतयाऽर्थान्तरत्वेनैव निग्रहात्, तथा च विशेष्यपरमादिपदमसङ्गतम्, तथाप्यप्रसिद्धप्रतियोगिकाभावमुपगम्यैव तत्सङ्गमनीयम्। एतेन—पक्षताभावप्रयोजकप्रमाविषयीभूताभावप्रतियोगिसाध्यकत्वं विवक्षणीयमिति नैयमव्याप्तिः, नवाऽबाधिताश्रयासिद्धेऽतिव्याप्तिः, प्रत्यक्षाभासादावपि न सा, तत्र बाधग्रहस्य पक्षत्वाभावाप्रयोजकत्वात्, नचैवं पक्षत्वविरहस्यैव निर्णायस्य दूषणत्वमस्तु लाघवादिति वाच्यम्, बाधग्रहस्योपजीव्यत्वात्साक्षादनुमितिप्रतिबन्धकत्वाच्च दूषणताया आवश्यकत्वादिति निरस्तम्, नेदं रजतमित्यादिग्रहस्येदमादौ रजतादित्वप्रकारकत्वसन्देहादिविरहप्रयोजकत्वस्यानिवार्यत्वात्। साध्यस्येति। विषयपदस्थाने साध्यपदं प्रयुक्तं प्रत्यक्षाभासादिविषयस्यासाध्यत्वाभिमानेन। तं निराकरोति प्रत्यक्षाभासेत्यादिना। व्यापकस्येति। प्रत्यक्षाभासादिविषयस्तु न तद्व्यापक इति भावः। बोध्यमानाभावस्येति बहुव्रीहिः। प्रकृते = वह्निरनुष्णः कृतकत्वादित्यादौ पक्षधर्मताबाधितस्थले, तेन ह्रदो वह्निमान् धूमादित्यादौ हेतुव्यापकत्वस्य साध्ये सम्भवेऽपि न क्षतिः, तथाप्यव्याप्तिः। अथ प्रदर्शनाचार्यमतानुसारेण प्रकृत इति बाधमात्रोदाहरणाभिप्रायकमेव, हेत्वपक्षधर्मतास्थले बाधानभ्युपगमादिति निवेदितमधस्तात्, तथा चासम्भव एवेति। इदमुपलक्षणम्, प्रकारतावच्छेदकसम्बन्धेन ज्ञानादेः प्रत्यक्षाभासादिव्यापकस्यापि तद्विषयत्वसम्भवेनातिव्याप्तिसम्भवात्। प्रतिज्ञातस्येति। प्रतिज्ञातत्वं न प्रत्यक्षाभासादिविषये इति नातिव्याप्तिरित्यभिमानः। वस्तुतस्तु प्रतिज्ञातत्वं विशेषणं वोपलक्षणं वा, आद्ये प्राग्वोऽसम्भवः, साध्याभावग्रहपर्यन्तं प्रतिज्ञाया अनवस्थानात्। द्वितीये कालान्तरीणप्रतिज्ञातत्वस्य प्रत्यक्षाभासादिविषयेऽपि सम्भवेनातिव्याप्तिर्दुर्वारेति। शब्दरूपस्येति। प्रकृतन्यायावयवस्य सतः प्रकृतानुमित्यन्यूनानतिरिक्तविषयकत्वाऽऽदजनकत्वादिरूपस्येत्यर्थः। परार्थत्वात् = परत्र बोधसङ्क्रान्तये उच्चारणीयत्वात्। पक्षनिविष्टस्येति। पक्षवृत्तेरिति नार्थः, व्याघातात्, अपि तु पक्षवृत्तितया साध्यस्य व्यतिरेकोऽत्र विवक्षितः, स च पक्षाधिकरणके साध्याभावे पर्यवस्यति, पूर्वत्रापि साध्याभावाधिकरणतया प्रकृतधर्मिनिवेशस्यावश्यकत्वेऽप्यपक्षतयाऽपि धर्मिणि विवक्षितेति विशेषः। प्रत्यक्षाभासादौ च धर्मिणि न पक्षतेत्यभिमानः। तथाभूतस्य = प्रमितसाध्याभावकस्य। साध्यसन्देहादिरूपपक्षतानाक्रान्ततयेति शेषः। क्रियमाणे इति। प्रमाविषयीभूतप्रकृतपक्षाभासनिष्ठाभावप्रतियोगिसाध्यकत्वं वक्तव्यमिति भावः। एवमभिमतदोषोऽपि प्रकृतपक्षाभासेत्यस्य स्थाने प्रकृतपक्षत्वाभिमतेत्युपयोजनीयः। पूर्वं = प्रत्याय्यितत्वग्रहात् पूर्वं पक्षाभासत्वप्रतीतावाधपासिद्ध्यैव हेतुदुष्टत्वसिद्धिरनुमित्यनुत्पादनिर्णायकत्वेति बाधस्य पृथग्दोषत्वमप्रामाणिकम्, पूर्वं तदप्रतीतौ तु पक्षाभासदुरवधारणत्वमित्याभासः। प्रत्याय्यितपक्षज्ञानं नानुमितिप्रतिबन्धकतया

क्रियमाणे च प्रष्टव्यम्, किं पक्षत्वाभिमतत्वम् ? किमु पक्षतयाऽभ्युपगम्यमानत्वम्, अथ पक्षतया प्रमितत्वम्, उत पक्षतया प्रतीतत्वम्, नाद्यः, दूषकं प्रति तदसम्भवात्, तेन बाध्यसाध्यस्य पक्षाभासतयैव प्रत्युताङ्गीकारात्। अनुमानबाधपेक्षयाऽपि नियमाभावः, सदनुमानास्फूर्तौ मन्दप्रज्ञेन प्रज्ञाभिमानवता च मयि वदति स्फुटदोषमपि को दूषयितुं शक्त इत्यभिप्रायेण यदृच्छया ज्ञातदोषस्यापि प्रयोगस्य सम्भवात्, तत्रानुमानबाधादिना पक्षत्वाङ्गीकाराभावेन तथाभूतबाधितानुमानाव्यापकमिदं लक्षणं स्यात्। न च पक्षतयोपन्यस्यमानत्वमङ्गीकारार्थ इति युक्तम्, तथा सति स्वार्थानुमाने कालात्ययापदेशाव्याप्तिः। नापि द्वितीयः, पक्षत्वेन प्रमिते विषये कालात्ययापदेशानवकाशात्। नापि तृतीयः, तदा ह्येवं लक्षणमिदं सम्पद्यते प्रमाणेन बोधितो यदीयसाध्यस्य पक्षप्रतीतिविषयांशस्य व्यतिरेकः स कालात्ययापदिष्ट इति; अस्य च वाक्यार्थस्य न कदाचिदपि सम्भवं पश्यामः, यदा तावत्प्रमाणेन साध्यस्य व्यतिरेकबोधस्तदा पक्षप्रतीति-

---

ऽभिमतम्, साध्याभाववान् पक्ष इत्यादिज्ञानस्यैवागृहीताप्रामाण्यकस्य तथात्वस्वीकारात्, वस्तुगत्या च बाधग्रहस्थले पक्षाभासत्वस्य पक्षताविरहपर्यवसन्नस्य सत्त्वेऽपि तदुपजीव्यतया बाधस्य दोषत्वमित्युक्तमेव, कारणविरह एव च कार्यानुत्पादनिर्वाहको न तु तत्प्रतीतिरपि, साध्यवत्त्वघटिता न पक्षत्वम्, येन पक्षताविरहेणैवान्यथासिद्ध्या बाधस्य पृथग्दूषणत्वासम्भवः शङ्कितुमपि शक्येतेत्यनुपदं व्यक्तीभविष्यति, एवञ्च पक्षाभासत्वप्रतीतावुक्तबाधितत्वव्यवहारे न काचित्क्षतिरिति चेदस्त्वेवम्, तथापि पक्षत्वस्य पक्षाभासत्वस्य चोक्तावपि मध्यक्षाभासादावतिव्याप्तिर्दुर्वारैव, धर्मिणि सन्देहादेः कदाचिदसम्भवात्, साध्याभावग्रहकाले च तदभावेन पक्षाभासत्वस्यापि सम्भवात्। पक्षवृत्तित्वप्रतियोगिकाभाववत्साध्यकत्वादिज्ञानादपि बाधितत्वव्यवहारेण सदौपधिकत्वस्य विरुध्यमानबाधितत्वे एव वक्तुमशक्यत्वाचेति। दूषकं = बाधोद्भावयितारम्। तदसम्भवात् = पक्षतयाऽभ्युपगमासम्भवात्। बाध्यसाध्यस्येतियनुमीहिगा प्रमितसाध्याभावकस्येत्यर्थकम्, बाधग्रहदशायां संशयादेरेव विरहे तद्ग्रत्याऽभ्युपगमस्य दूरोत्सारितत्वात्। साध्यवत्त्वनियतपक्षतां स्वीकृत्य तु नायं ग्रन्थो योजनार्हः, तथा सति वस्तुतः साध्याभाववति तद्ग्रहदशायामनुमितिर्न स्यात्, पक्षताविरहात्. यद्यपि साध्यसंशयादिकं विनाप्यनुमितेर्दर्शनेन तदपि न पक्षतात्वमिति तत्स्वीकारेणापि सन्दर्भस्यास्य प्रवृत्तिरनुचितैव, कश्चित्तस्य पक्षतात्वोपगमस्तु प्रकृतेऽपि समः। तथापि साध्यवत्त्वनियतस्य पक्षत्वस्योपगमे तदभावेनैवानुमित्यनुत्पादनिर्वाहेण बाधप्रमाया हेतुदोषत्वमेव न स्यात्, साध्याभाववद्वृत्त्यादेर्वैयर्थ्येऽपि तस्यासिद्ध्यन्तर्भावे प्रयोजनस्यादिति तादृशपक्षत्वोपगमोऽतिशिथिलायते। अनुमानबाधपेक्षयेति। स्थापनावादिना पक्षतयाऽभ्युपगम्यमानत्वविवक्षायामित्यर्थः। नियमेति। स्थापनावादिभिः पक्षताङ्गीकाराभ्युपगमस्येत्यादिः। नियमाभावमुपपादयति सदनुमानेति। मन्दप्रज्ञेनेति। यदृच्छयेत्यादिना सममन्वयः। प्रयोगे दोषज्ञानस्यानपेक्षासूचनाय स्वसामग्रीवशादित्यर्थकं यदृच्छयेत्युक्तम्। ज्ञातदोषस्य = साध्याभाववत्त्वज्ञानेन गृहीतहेतोः। पक्षतयोपन्यस्यमानत्वं प्रतिज्ञोपन्यस्तत्वम्, तच्च स्थापनावादिनः प्रतिज्ञानादक्षतमेव। कालात्ययापदेशेति। पक्षे साध्याभावग्रहेऽर्थः। तत्सत्त्वे तत्प्रतिबध्यतया साध्यसंशयादिकं न स्यात्, तदभावे च पक्षत्वेन प्रमितिरपि कथं भवेत्। न च साध्यसंशयाद्यनन्तरं पक्षे साध्याभावग्रहसम्भवेन अन्यथासङ्गतिरिति वाच्यम्, पूर्वोक्ते ज्ञातदोषहेतुप्रयोगस्थले साध्यसंशयाद्यभावेन तथाप्यव्याप्तेः, न च पक्षत्वेन प्रमितत्वाभ्युपगमादेव बाधितत्वव्यवहार इति निय-

नास्ति विशेषदर्शने समस्यानवकाशात्, ततश्च तदा पक्षप्रतीत्यभावेन तद्विषयत्वाभावात् तद्विषयांशस्येति विशेषणाभावाधीनो विशिष्टस्य लक्षणात्मनोऽभावः । यदा च प्रमाणेन साध्यव्यतिरेकबोधनं नास्ति तदा तस्यैव लक्षणभागस्याभावाल्लक्षणाभाव इति नित्यमसत्त्वव्यवस्थितेन लक्षणेन कथं व्यवस्थापयन् श्लाघनीयपक्षो भवान् । न च वैशेषिकप्रक्रियामाश्रित्य विनश्यदवस्थस्यापि पक्षप्रतीतिस्तत्काले सम्भावनीया; तदीयसाध्यव्यतिरेकावगमनिवर्तनीया हि सा, तत्साध्यव्यतिरेकावगमश्च पूर्वमेव भूत इत्यवश्याभ्युपगमनम्, अन्यथा प्रमाणेन बाध्यमानत्वं कथं साध्यव्यतिरेकस्य तदावगम्येत । न च

---

णोऽपि, एवञ्चोक्तस्थले सिषाधयिषाविरहविशिष्टसिद्ध्यभावरूपपक्षतासम्पादनक्लेशोऽप्यनादरणीय । एतच्च पक्षत्वाभ्युपगमघटितकल्पेऽपि समानमेव, बाधदशायां सिद्ध्यभाववत्ताऽभ्युपगमसम्भवेऽपि सर्वत्र बाधितत्वव्यवहारस्य तदंशगमामूलकत्वात् । एवमुत्तरत्रापि । पक्षप्रतीतिविषयांशस्येति पूर्वोक्तपक्षप्रतीतिविषये इत्यर्थे पर्यवसानं बोध्यम् । पक्षप्रतीतिस्तु पक्षताप्रकारकप्रतीति । एवमग्रेऽपि । आविष्कृता च सा पक्षत्वाभावेऽपि सम्भवतीत्यभिमान । तदेति । सन्देहाद्यभावेनेति शेष । विशेषदर्शने इति । विरोधिनीत्यर्थ । तच्च विशेषदर्शनं बाऽन्यद्वेत्यन्यत् । प्रकृते स्वप्नदेव, सन्देहाद्यभावस्य स्वरूपसत एव स्वाधिकरणे स्वप्रतियोगिसमानाधिकरणप्रतिबन्धकताया अनुभवबलात् सर्वसम्मतत्वात्, उक्तं च प्रामाण्यवादमणौ—"सहकारमन्तु भानामीति प्रत्येता"ति । यथाश्रुत तु तदैव सङ्गच्छेत, यदि सन्दिग्धसाध्यवत्त्वं सिषाधयिषितसाध्यवत्त्वं वा पक्षत्वं भवेत्, तथा सति साध्याभावबोधस्य तदभावावगाहितया विरोधदर्शनत्वसम्भवात्, परन्तु तादृशपक्षत्वाभ्युपगमो बाधस्य पृथग्घेत्वाभासत्वाभ्युपगन्तुर्न सम्भवतीत्याशयेनेदमनुपदम् । न च साध्यसन्देहादेः पक्षत्वेऽपि तद्विघटनमात्रेण साध्याभावबोधस्य पक्षताप्रमविरोधित्वं सम्भावनम्, साध्यसन्देहाभावकाले एव साध्यसन्देहबोधस्य भ्रमतया सम्भाव्यत्वात् । विशिष्टसिद्ध्यभावस्य पक्षतात्वे तु नमुत्तरम् । नित्यमसत्त्वव्यवस्थितेनेति । असत्त्वं स्वाभाव, तेन व्यवस्थितिः स्वाभावव्यवसम्बन्धेन वृत्तिता, तथा च सर्वदैव स्वस्याप्रवृत्तिरित्यर्थ । लक्षणेन = लक्षणत्वाभिमतेन । व्यवस्थापयन् = इतरव्यावृत्ततया प्रमापयितुं प्रवृत्त । वशेषिकप्रक्रियामिति । विभुवर्तिविशेषगुणानां स्वसमानाधिकरणोत्तरवर्तिविशेषगुणनाश्यत्वनियममित्यर्थं । विनश्यदवस्था = द्वितीयक्षणवृत्तिनी । तत्काले = बाधग्रहकाले । तदीयगुणस्य पूर्वगुणनाशकत्वमुत्तरस्यैव सम्भवतीति तदुत्पत्तिक्षणे पूर्वगुणस्य नाशसम्भवेन बाधग्रहक्षणे पूर्वमुत्पन्नाया पक्षताप्रतीते प्रमितिरूपाया एव सत्त्वसम्भवः, बाधग्रहात्पूर्वं तस्यायुत्पत्तिसम्भवादिति भावः । नवीत्यत्र हेतुमाचष्टे तदीयेत्यादि । प्रकृतपक्षसाध्याभाववैशिष्ट्यावगमप्रयुक्तसाध्यसन्देहाद्यनुत्पादप्रयुक्तानुत्पत्तिकेत्यर्थ । सा = पक्षत्वप्रतीति । तद्दित्यादि प्रोक्तवैशिष्ट्यावगमपरम् । पूर्वं = साध्याभावे प्रमितत्वावगमात्पूर्वम् । तदा = तादृशबाधितत्वस्योद्भावनकाले व्यवहारकाले वा । अयम्भाव —पक्षत्वप्रकारकप्रतीतिविषयो वह्निरनुद्गताभावप्रकारकप्रमितिविषय इति स्वल्लक्षणानुसारेणोद्भावनाकार स्यात्, साध्याभावप्रमिते पूर्वमुत्पादेन च तद्विषयत्वमवगम्योद्भावनं स्यात्, तदुत्पत्ते पूर्वमुत्पन्ना च पक्षत्वप्रकारकप्रतीति न प्रमितिविषयत्वावगमकालेऽवस्थातुं प्रभवतीति न विशेषणं स्यात्, तस्मात्साध्याभावप्रमित्युत्पत्त्युत्तरमेव तदुत्पत्तिराकाङ्क्षा, तदा च सन्देहाद्यभावेन सा न सम्भवतीति क्व लक्षणसमन्वय' । यद्युतस्त्वसाधकतासाधनेऽनुमितिप्रकारकत्वाभावान्यतरप्रतिबन्धे बोधयुक्त स्यादुद्भावनवत्, नचैवं पक्षत्वप्रकारकप्रतीतिविषयत्वमिति कथं तद्घटितरूपोद्भावनम्, अत एव तद्घटितलक्षणमप्यनुचितमेव, नहि प्रय-

वृथा विशेषणपदोपन्यासः, तदनुपन्यासे चान्योन्याभावस्वरूपमात्रमुपन्यस्तं भवेत्, तच्च प्रत्यक्षाभासादेर्व्यवच्छेद्यस्यापि सङ्ग्राहकं ततश्च विशेष्यादन्योन्याभावादधिकं विशिष्टरूपं यद्विशिष्टमुपन्यस्यताम्, स च यदि प्रतियोगी तदीयोऽभिधीयते तर्हि तस्याभावात्तदानीं विशिष्टाभावः प्रसक्तः, विशेष्यमात्रं परिशिष्टम्, तच्च केवलमतिप्रसक्तम्, तस्माद्विशिष्टव्यवहारप्रवर्तनकाले विशेष्यातिरिक्तं किञ्चिदनभ्युपेत्य विशिष्टसत्ता व्यवहर्तुमशक्या, अतः प्रतियोगी नाभावस्य विशेषणं भवितुमर्हति, उपलक्षणं तु स्यात्, तत्र चोक्तमेव। तच्चान्योन्याभाव एको न भवति, भिन्नप्रतियोगिकौ द्वावभावौ तौ, तथा च प्रतियोगिलक्षितं तत्स्वरूपमन्यदेवेति सिद्धान्ताविरोधि; न च युक्तम्; उभयं ह्यन्या-

न्योन्याभाव इति। बाधितप्रत्यक्षाभासायो पारस्परिक एक एव भेदो भवेद्यदि तदा बाधितहेतुभिन्नत्वेनाभ्युपगते प्रत्यक्षाभासादौ प्रत्यक्षाभासादिभिन्नत्वस्याप्यावश्यकत्वादतिप्रसक्तिस्तदवस्था स्यात्, यदा तु बाधितप्रतियोगिकत्वविशिष्टोऽन्यः, अन्यश्च प्रत्यक्षाभासादिप्रतियोगिकत्वविशिष्टस्तदाऽऽद्यस्य सत्त्वेऽपि न द्वितीयस्य सत्त्वमतः प्रत्यक्षाभासादौ। ननु स्यादेवं यदि प्रतियोगिनानिरूपकत्वसम्बन्धेनानुयोगिनात्सम्बन्धेन वा प्रत्यक्षाभासादिर्विशेषणीभवेत्, न त्वेवं सम्भवति, दण्डविशिष्टं पुरुषमानयेत्यादावेकज्ञानीयेनैव कर्मतासम्बन्धेन दण्डपुरुषयोर्विधेयान्वयित्वदर्शनेन विशेषणस्य विशेष्यीयान्वयितावच्छेदकसम्बन्धेनैव विधेयान्वयित्वनियमकल्पनात्, प्रकृते च सम्बन्धभेदात्, दण्डिनं भोजयेत्यादौ तु विद्यमानस्यापि दण्डस्योपाधित्वं परमस्तु न तु विशेषणत्वमिति; अथ प्रतियोगिनोऽपि भवतूपाधित्वमितिचेन्न, प्रतियोगिनोऽभावे विद्यमानत्वाभावात्, संयोगादिसम्बन्धेन हि विद्यमानताधीरनुभवसिद्धा न त्वनुयोगितादिसम्बन्धेनापि। अथोपलक्षणमपि तावद्व्यावर्तकमेवेति तत्पक्षेऽपि कथमतिप्रसक्तिः, उपलक्षणस्यापि बाधितं प्रत्यक्षाभासादिकं नेति प्रतीतिविषयत्वाभ्युपगमात्, नचैतावता पारस्परिकत्वस्यैकत्र भेदे भङ्ग इति पीडितान्योन्याभावसञ्ज्ञेति वाच्यम् एकानुयोगिकत्वापरप्रतियोगिकत्वाभ्यामेव तदुपपत्तेरिति चेन्न, उपलक्षणस्य प्रतियोगित्वस्य तद्विषयकसाक्षात्कारविषयताऽपि कदाचिदभावेऽनुभूयेतेत्युक्तं भेदखण्डने पूर्वमिति चेन्न, संयोगादिनः प्रतियोगिनायामविशिष्टरूपितानुयोगिता। याश्च विलक्षणतायाः अनुभवसिद्धत्वेन तत्तत्सम्बन्धितविशेषणविशेष्यभावस्यापि विलक्षणत्वात्, न ह्येकस्य यादृशः स्वभावस्तादृशोऽन्यस्यापि, अनङ्गीकारे स्वभावप्रसङ्गात् एवञ्च संयोगादिनाऽस्तु विशेषणमौपाधिकं वा विद्यमानस्यैव, प्रतियोगितादिनाऽविद्यमानस्यापि सा केन वार्यते। अन्यथा प्रतियोगिनो व्यावर्तकतायाः अनुभवसिद्धायाः अनुपपत्तेरिति भावः। भिन्नप्रतियोगिकावितिः। न भिन्नप्रतियोगिकत्वमात्रं द्वित्वसाधकम्, उभयत्वावच्छिन्नाभावेऽव्यभिचारदर्शनात्, अपि तु व्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताकत्वसहितम्। प्रतियोगिलक्षितं = प्रत्यक्षाभासादिव्यावृत्तम्। तत्स्वरूपं = भेदस्वरूपम्। अन्यत् = बाधितप्रतियोगिकभेदादन्यत्। सिद्धान्त अन्योऽन्येति न्यायेन सिद्धान्तविरोधस्य दृष्टतायाः द्वितीयपरिच्छेदे वक्ष्यमाणत्वादनुपगमे स्यादिह न च युक्तमिति। न चा युक्तमित्यर्थः। युक्तिविरोधो हि न केनापि सोढव्य इति भावः। यद्यपि प्रतियोगित्वादिकं दुर्वचमित्युक्तादिभिः संसर्गाभावान्योन्याभावैकधर्मत्वमेवऽस्त्यादिति तेन सम्बन्धेनाविद्यमानस्य विशेषणत्वानुपपत्तिर्न नाविदुषामश्नुति पुष्यते, तथाप्युक्तैर्वैदेशिकः परकीयसिद्धान्तं विद्युतयन् परिहरति उभयमिति। तादात्म्याभावो भेद इति प्राचीनमतेऽभ्युपगम्यते, तत्र घटपटयोस्तादात्म्यस्य प्रतियोगित्वविवक्षायामेकप्रतियोगिकत्वात् परस्परं भेदस्य समानयोगक्षेमत्वात्सः, अनेकत्वापि वा प्रामाणिकत्वापत्तिः, अस्मन्मतेऽत्यन्ताभावैकत्वाङ्गीकारात्, "लोभावविरहात्मकं वस्तुनः प्रतियोगिनि" इत्यत्र वस्तुन इति षष्ठ्यन्तदर्शनात्परैरङ्गीकृते प्रति-

न्याभावस्यैकात्मतया प्रतियोगि, एकात्मतायाश्च भेदविरोध एव, ततश्च येन रूपेण प्रतियोगित्वं तेन रूपेण भेदानवकाशाद्भिन्नप्रतियोगिकता कुतोऽन्योन्याभावस्य, येन रूपेण भिन्नता, तेनान्योन्याभावं प्रति प्रतियोगिता नास्ति वस्तुनो । ननु वस्तुतस्तथात्वाभावात्कथमेकतया प्रतियोगित्वमन्योन्याभावं प्रति घटते वस्तुनो ? यथा वस्तुना भूतलससर्गाभावेऽपि घटस्य भूतलसंस्पृष्टतया भूतलसंसर्गाभावं प्रति, तत्र यथाऽन्यद्भूतलसंस्पृष्टतया दृष्टं तथाऽत्रापि तावेव सप्रकारभेदौ तदात्मानौ दृष्टौ सोऽयं त्वदर्शना

यारिशाया स्फुट निषेधात्त्व प्रतियोगिनाश्रयत्वेऽलीक व्याघातात्त्व, अलीकस्यैव निषेधेऽलीकस्य तत्र सत्त्वापत्त्या निषेधं जानतोऽपि तत्र प्रवृत्त्याद्यापत्तेश्च । अत एव—आरोपितमलीकमेव, तस्यैव चात्यन्ताभावप्रतियोगित्वम्, न वस्तुतस्तस्य घटादेरिति—माध्वमतमसङ्गतम्, सत्तानुसन्धाने इह स घटो नास्तीति प्रतीतिर्भवत्येव, अन्यथा तु घट इह नास्तीति सामान्याभावावगाहिनीति । एवञ्च तार्किकसिद्धान्तपदर्शनपराऽस्य सन्दर्भाऽभावस्यासत्प्रतियोगिकतया न व्याख्यानार्हः । पटो न घटो घटो न पट इत्यादौ घटतादात्म्यरूपेण पटस्य तेन रूपेण घटस्यैव वा पटे पटतादात्म्यरूपेण च घटस्य तेन रूपेण पटस्यैव वा घटे निषेधाविषय इति तादात्म्याभावो भेद इति वस्तुगतिनिरूपणं प्राचां नानुपपन्नम्, शिखीध्वस्त इत्यादाविव तत्तन्निषेधस्य पटादौ घटतादात्म्यादिनिषेध पर्यवसन्नत्वात्, घटादेः प्रतियोगित्वानुभवपरत्वमनुपपद्यत इति सुष्ठूक्तं 'उभयं ह्यन्योन्याभावस्यैकात्मतया प्रतियोगी'ति । एकात्मतया = तादात्म्यरूपेण । येन रूपेण = तादात्म्येन । भेदानवकाशात् = भेदवत्तानवकाशात् । ननु घटो न पट, पटो न घट इत्यत्रोभयस्य प्रतियोगिनः सद्‌ताभिन्नप्रतियोगिकता स्वीकृतैवेति कथं साऽऽक्षिप्यते तत्राह येन रूपेणेति । घटत्वपटत्वादिनेत्यर्थः । भिन्नता = भेदानुयोगिता, अत्रैव तृतीयार्थावच्छिन्नत्वस्यान्वयो न तु भेदे, अन्यथा यद्धर्मावच्छिन्नं प्रतियोगि च तद्धर्मावच्छिन्नप्रतियोगिताको न भेदः, यद्धर्मावच्छिन्नप्रतियोगिताकश्च भेदः तद्धर्मावच्छिन्नं न प्रतियोगित्वमित्यादिसिद्धवें व्याघातापत्ते । एवञ्च येन रूपेण प्रतियोगिना सह एकरूपेण भेदवत्तामादाय भिन्नप्रतियोगिकता सम्पाद्यमानाऽपि भेदद्वैतसाधनेऽप्रयोजकत्वमवाक्रान्तत इति भावः । घटपटयोस्तादात्म्यस्य भेदप्रतियोगितावच्छेदकत्वमुक्तमित्यभिप्रायेणाक्षिपति । घटादितादात्म्यं घटादौ प्रसिद्धमेव प्रतियोगितावच्छेदकत्वाच्चमिति सोदाहरणं परिहारमाह यथेति । घटस्याभावस्य दृष्टान्तत्वेन । प्रतीति । प्रतियोगित्वमनुपपद्यते । संस्पृष्टता संयोग, स च संयोगत्वात्मकसामान्यरूपेणापि वस्तुना भूतलीय एव संसर्गतया प्रतियोगितावच्छेदक, अन्यदीयसंयोगेन घटनिषेधानस्य भूतले घटार्थिप्रवृत्तिविरोधित्वासम्भवादिति भावः । तावेव = घटपटावेव । घटपटयोः परस्परतादात्म्यस्याप्रसिद्धत्वमाह । सप्रकारभेदावितिः । घटत्वपटत्वप्रकारकाभ्यां भेदवन्तावित्यर्थः । ननु सर्वमिन्मतासम्भव एव घटो न पट इत्यादौ व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावस्यानुभविकत्वेऽसम्प्रतिपत्ते, विवदन्तं वा प्रत्यपि व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावस्य प्रामाणिकत्वे इ या पादितमनुमानसम्भवनाशङ्कायाम्, घटादितादात्म्यरूपेण घटादेरेव घटादौ निषेधपक्षेऽपि घटाद्यत्यन्ताभावघटादिपरम्पराभावपर्यवसितत्वेन नैव स्यात्, घटपटयोः प्रतियोगितावच्छेदकरूपेण भेदस्याप्रयोजकत्वात्स्वीकारात्, विरुद्धधर्माध्यासेन यदि तथाभेदस्तदा न भेदोऽपि मुख्यः, प्रत्यक्षाभासादौ बाधित भेदेति भेदवति प्रत्यक्षाभासादिकं नाम भेदव्यवहारात् बाधित चानुमानं प्रत्यक्षाभासादिकं भेदिति भेदवति बाधितं प्रति भेदव्यवहारात् । किञ्च घटादितादात्म्यं यदि घटत्वादिरूपं तदा येन रूपेण घटस्य परस्परभेदानुयोगित्वं तेनैव प्रतियोगित्वमिति दिङ्मुक्तं 'येन रूपेण भिन्नता तेनान्योन्याभावं प्रति

